श्री दयाविमलजि जैनग्रंथमाला ( २३ ).

श्रीमत्पन्न्यासदयाविमलगणिशिष्य–पन्न्याससौभाग्यविमलशिष्य–पन्न्यासमुक्तिविमलेन विरचिता ।

# ॥ श्रीआगमवाचनमीमांसा ॥

छपावी प्रसिद्धकर्त्ता

राजनगरस्थश्रेष्ठिमनसुखभाइप्रतोलिनिवासि श्रेष्ठिभगुभायात्मजजमनाभायाभिधगृहिवर्यद्रव्यसाहाय्येन मुद्रापयित्वा प्रकाशिता च ।

श्रीवीरनिर्वाणात् २४४६. ई० सन १९२०. विक्रमार्क १९७७.

प्रथमावृत्तिः. मूल्यं वांचनमनन. प्रति ५००.

घीकांटावाडी–राजनगरे ( अमदावाद )
श्री " जैन एडवोकेट " मुद्रणालये
शा गोकुलदासपुत्रचमनलालेन मुद्रितम्

पुस्तकप्राप्तिस्थानम्—
झवेरी चदुलाल मोहनलाल कोठारी
ऑ सेक्रेटरी–श्रीदयाविमलजि जैनग्रन्थमाला.
ठे. दादासाहेबनी पोल—अमदावाद



पन्यासश्रीदयाविमलजिद्गुरुभ्यो नमः ॥

# ॥ अथ श्रीआगमवाचनमीमांसा बृहद्वृत्तिर्लिख्यते ॥

श्रीपार्श्वनाथं प्रणिपत्य भक्त्या,
सद्भारतीं देवगुरुं स्वबुद्ध्या ।
श्रीसद्गुरुं चागमवाचनस्य,
मीमांसिकावृत्तिमहं विधास्ये ॥ १ ॥

इह विघ्नविनायकोपशान्तये शिष्यजनप्रवर्त्तनाय च शिष्टसमयपरिपालनार्थं चेष्टदेवतानमस्काररूपं भावमंगलमुपादेयं तथा श्रोतृजन-प्रवृत्यर्थं शिष्टसमयपरिपालनार्थं मंगलादिचतुष्टयं पुरो वक्ष्यमाणवान्यं तथाहि इह श्रेयो भूते वस्तुनि प्रवर्त्तमानानां प्रायो विघ्नः सम्भवति

पीकांटावाडी—राजनगरे ( अमदावाद )

श्री "जैन एडवोकेट" मुद्रणालये

शा गोकुलदासपुत्रचमनलालेन मुद्रितम्

पुस्तकप्राप्तिस्थानम्—

झवेरी चदुलाल मोहनलाल कोठारी

ऑ. सेक्रेटरी—श्रीदयाविमलजि जैनग्रन्थमाला

ठे. दादासाहेबनी पोळ—अमदावाद.



पन्यासश्रीदयाविमलजिद्गुरुभ्यो नमः ॥

# ॥ अथ श्रीआगमवाचनमीमांसा बृहद्वृत्तिर्लिख्यते ॥

श्रीपार्श्वनाथं प्रणिपत्य भक्त्या,
सद्भारतीं देवगुरुं स्वबुद्ध्या ।
श्रीसद्गुरुं चागमवाचनस्य,
मीमांसिकावृत्तिमहं विधास्ये ॥ १ ॥

इह विघ्नविनायकोपशान्तये शिष्यजनप्रवर्त्तनाय च शिष्टसमयपरिपालनार्थं चेष्टदेवतानमस्काररूपं भावमंगलमुपादेयं तथा श्रोतृजनप्रवृत्यर्थं शिष्टसमयपरिपालनार्थं मंगलादिचतुष्टयं पुरो वक्ष्यमाणवान्यं तथाहि इह श्रेयो भूते वस्तुनि प्रवर्त्तमानानां प्रायो विघ्नः सम्भवति

श्रेयोभूतत्वादेव श्रेयो भूतं चेदं स्वर्गापवर्गसंसर्गहेतुत्वात् तथा चोक्तम्, पूर्वसूरिभि श्रेयांसि बहु विघ्नानि भवन्ति महतामपि। अश्रेयसि प्रवृत्तानां क्वापि यान्ति विनायकाः ॥ १ ॥

इति वचनात् अस्य शास्त्रस्य यादार्थिनां सम्यग्ज्ञानोपदेशक तया श्रेयोभूतस्य कोऽपि विघ्नो माऽभूदिति विघ्नविनायकोपशान्तये मगलमुपादेय उक्त च, बहु विग्घाई सेयाई तेण कय मंगलो पयारेहिं। सत्थे पयट्टियव्व विज्जाए महानिहीएव ॥ १ इति वचनात् शास्त्रारम्भेऽभीष्टदेवता नमस्कारमाह ग्रन्थकारस्तच्छ्रेयमाश्रिय काव्यं श्रीमत्पार्श्वजिनेश्वरमिथि तत्र श्रीसकल त्रिभुवन जन मनश्चमत्कारकारिमनोहारिपरमार्हन्त्य महमहिमाविस्तारि " अशोकवृक्ष' सुरपुष्पवृष्टिर्दिव्यध्वनिश्चामरमासनं च भामण्डलं दुन्दुभिरातपत्रं सत्प्रातिहार्याणि जिनेश्वराणाम् ॥ १ ॥ " इति स्पष्टाष्टप्रातिहार्यशोभा या चतुस्त्रिंशदतिशयविभूतिर्या सा श्रीरस्त्यस्य श्रीमत् तदस्यास्त्यस्मिन्निति मतुः ७-२-१॥ इति सिद्धहैमशब्दानुशासनव्याकरणसूत्रात्र मतु प्रत्यय एतादृश पार्श्वजिनेश्वरं तथा निजगुरुं पन्यासश्रीदयाविमलजित् सुशिष्यपन्याससौभाग्यविमल जिदाह्वयं स्वकीयं गुरुं तथा सज्ञारतीं श्रेष्ठसरस्वतीं देवतां वाचमिति गम्यं तान् संनतशिरासंनतं नम्रं शिरः मस्तकं यस्य तादृशोऽहं प्रणम्य प्रणम्य नत्वा नन्वत्र नत्वेत्यनेनापि सिद्ध्यति किं प्रकारेण इति चेदुच्यते प्रकारो मानसिकं नमस्कारं घोषयति उपहासनमस्कारं निराकरोति यथा " नमस्यं तत्ससि प्रेम यंगारसिसादरम्। क्रम क्रमिमनि' सारमारंभगुरुमम्बरम् ॥ १ ॥ इत्यादिवत् प्रकर्षेण कायवाङ् मनोभिर्नत्वेति प्रणम्य निमकस्य स्वकीयस्य महाबुद्धिस्तस्याः विभाकान्तिस्तस्याः हृदये हृदितवे सार्वोक्तागमवाचनस्य तीर्थंकरोक्तागमवाचनस्य सुमीमांसिकां सुविचारिकां कुर्वे अर्थात् केरागमाः वाचनीयाः इति विचारिकां विरचयामि तेन सन्तः सज्जना मयि ग्रन्थकर्तरि प्रसन्नहृदयाः प्रस न्नहृदययुक्ताः सन्तु भवन्तु तथा सुदार्थमेव शार्ं तन्वन्तु विस्तारयन्तु इति मंगलं तथाच वादी शङ्कां प्रकटयमाह नन्वत्र नमस्कारस्य विघ्नविघाते कथं सामर्थ्यं उच्यते नमस्कारेण पुण्यपुञ्जं जायते पुण्येन विघ्ना प्रतिहन्यन्ते इति पुनः शङ्का कुर्वन्नाह ननु मानसादिनमस्कारलपचारित्रादिना

मंगलान्तरेणैव विघ्नोपघातसद्भावादिष्टसिद्धिर्भविष्यतीति किमनेन ग्रंथगौरवकारिणा वाचनिकनमस्कारेणेति चेदुच्यते सत्यं किन्तु श्रोतृजनप्रवृत्त्यर्थमिदं भविष्यति तथाहि यद्यप्युक्तन्यायेन कर्त्तुरविघ्नेनेष्टसिद्धिः स्यात्तथापि प्रमादवतः शिष्यस्येष्टदेवतानमस्काररूपं मंगलं विना प्रक्रान्तग्रन्थाध्ययनश्रवणादिषु प्रवर्त्तमानस्य विघ्नसम्भवादप्रवृत्तिः स्यात् मंगलवाक्योपन्यासे तु मंगलवचनाभिधानपूर्वकं प्रवर्त्तमानस्य मंगलवचनापादितदेवताविषयशुभभावव्यपोहितविघ्नत्वेन शास्त्रे प्रवृत्तिरप्रतिहतप्रसरा स्यात् तथा देवताविशेषनमस्कारोपादाने सति देवताविशेषगदितागमानुसारीदं शास्त्रमतः समुपादेयमित्येवंविध बुद्धिनिवन्धनत्वेन शिष्यप्रवृत्त्यर्थमिदं भवतीति यच्चोक्तम्, पूर्वर्षिभिः मंगल पुव्वपवत्तो पमत्तसीसो वि पारमिह जाइ । सत्थि विसेसणाणा तु गौरवादिह पयट्टेज्जा ॥ ? ” पुनर्वादी शङ्कां कुर्वन्नाह ननु मङ्गलविकलानामपि वहुतमशास्त्राणां दृश्यते संसिद्धिः श्रोतृजनप्रवृत्तिश्चेति ततः किमनेनानेकान्तिकेन शास्त्रगौरवकारिणा मङ्गलेनाभिहितेनेति चेदुच्यते सत्यं यत्रापि च नमस्कारमन्तरेणापि निर्विघ्ना शास्त्रपरिसमाप्तिर्दृश्यते तत्रापि मानसिकनमस्काररूपोऽयं घटत एवेति सफलो नमस्कारः इति अथवा शिष्टसमयपरिपालनार्थमिदं भविष्यति तथाहि शिष्टाः क्वचिदभीष्टे वस्तुनि प्रवर्त्तमाना इष्टदेवतानमस्कारपूर्वकं प्रायः प्रवर्त्तन्ते इति ॥



# ॥ अथ श्री आगम वाचन मीमांसा लिख्यते ॥

## शार्दूलविक्रीडितवृत्तम्

श्रीमत्पार्श्वजिनेश्वरं निजगुरुं भट्टारकं देवतां
मत्स्थाऽहं प्रणिपत्य संनतशिरा कुर्वे सुमीमांसिकाम् ।
सार्थोक्तागमवाचनस्य निजकप्रज्ञाविमर्शाय च
सन्तः सन्तु मयि प्रसन्नहृदया स्तन्वन्तु शास्त्रं मुदा ॥ १ ॥

शिष्टसमयपरिपालितो भवन्त्विति मङ्गलमभिधेयं यदुक्तम्, शिष्टा शिष्टत्वमायान्ति शिष्टमार्गानुपालनात् । तदुल्लङ्घनादशिष्टत्वं तेषां प्रसज्यते ॥ १ ॥ तथा श्रोतृजनप्रवृत्त्यर्थं मङ्गलादिचतुष्टयमभिधेयं तथा चोक्तम्, मङ्गलं चाभिधेयं च सम्बन्धश्च प्रयोजनम् । चत्वारि कथनीयानि शास्त्रस्य धुरि धीमता ॥ २ ॥ तत्र मङ्गलमभिहितं नमस्कार वचनेन अभिधेयं चात्र शास्त्रे सम्यगागम वाचनस्वरूपं सम्बन्धश्चास्य वाच्यवाचकभावादिस्तथाहि एतच्छास्त्रं वाचकं सम्यगागम वाचनस्वरूपं वाच्यं उपायोपेयभावलक्षणो वाऽत्र सम्बन्धः वचनरूपापन्नं हीदं शास्त्रमुपायः तत्परिज्ञानं चोपेयमिति तथा प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते इति वचनाच्च प्रयोजनं त्वनन्तर परम्परभेदाभ्यां द्विधा तत्रानन्तरं प्रयोजनं शिष्याणां शास्त्रार्थपरिज्ञानं परंपरं प्रयोजनं तु ज्ञानलब्धिस्फूर्त्या कीर्तिप्रभृति आचार्यस्य त्वनन्तरं प्रयोजनं शिष्यानुग्रहः

परंपरं तु तदेव ऐहिकमिदमुक्तं पारत्रकं तु परम्पर प्रयोजनमुभयेपामपि निःश्रेयसा वाप्तिरिति तथा मङ्गलादीनां विशेषविस्तारस्तु श्री आवश्यकसूत्र बृहद्वृत्त्यादिभ्योऽवसेयोऽलं विस्तरेण ॥ इति श्री आगमवाचनमीमांसा बृहद्वृत्तौ प्रथमकाव्यार्थः ॥ १ ॥

आज्ञां यः प्रविमन्यते जिनपते–राप्तोक्तसूत्रव्रजं
योगोद्वाहविधिं विधाय सुयतिर्यो वाचयेच्छुद्धितः ।
पञ्चाङ्गीवचनं प्रमाणयति यस्तस्यैव शुद्धं सदा
सम्यक्त्वं जिननायकैः प्रकथितं स्वीयागमौघे वरे ॥ २ ॥

आधुनाकस्य प्राणिनः सम्यक्त्वं शुद्धं तदेवाह आज्ञां यः प्रविमन्यते जिनपतेरिति तद्व्याख्या यः पुरुषः जिनपतेस्तीर्थङ्करस्य आज्ञामनुज्ञां प्रकर्षेण विशेषेण च मन्यते तस्य तथा आप्तोक्तसूत्रव्रजमिति । आप्तास्तीर्थङ्करास्तैरुक्तानि सूत्राणि सिद्धान्तास्तेषां व्रजः समूहस्तं सूत्रव्रजं योगोद्वाहविधिं योगवहनक्रियां विधाय कृत्वा शुद्धितः द्रव्यभावविशुद्धितः यः सुयतिः सत्साधुर्वाचयेत् तस्य पुनः यः प्राणी पञ्चाङ्गीवचनं प्रमाणयति प्रमाणीकुरुते तस्यैव प्राणिनः सदा निरन्तरं सम्यक्त्वं शुद्धं नान्यस्य इति स्वीयस्य निजानामागमानामोघे समूहे जिनानां सामान्य केवलिनां नायकैः स्वामिभिस्तीर्थङ्करैरिति यावत् प्रकर्षेण कथितं प्रोक्तमस्तीति शब्दार्थः अत्र वादी शंकां प्रकुर्वन्नाह नन्वत्र पञ्चाङ्गीशब्देन किं ग्राह्यमिति चेदुच्यते, सूत्रं १ निर्युक्तिः २ भाष्यं ३ टीका ४ चूर्णी ५ एतासां द्विगुः समाहारः पञ्चाङ्गी तत्र सूत्रं सूचनकृद् यद्वा सूत्रयति वेष्टयतिअल्पाक्षरैर्बहूनर्थानिति सूत्रम १ वर्णागमादिभिः पदानां निर्वचनं निरुक्तं या निर्युक्तिः निरुक्त पदभञ्जनमित्यभिधान चिंतामणि वचनात् २ तथा भाष्यते इति भाष्यं वा सूत्र प्रोक्तमर्थं प्रपञ्चयतीति भाष्यं भाष्यं सूत्रोक्तार्थं प्रपञ्चकमिति हैमीकोशवचनात् भाष्यं ३ तथा

गीकयति गमयत्यर्थान् टीका वा सुषमाणां विषमाणां च निरन्तरं व्याख्या यस्यां सा तथा टीका निरन्तर व्याख्या इत्यभिधान चिन्ता मणि रचनात् टीका ४ तथा चूर्णी क्रियते एकी क्रियते अर्था अस्यामिति चूर्णी ५ इत्येवं पञ्चाङ्गी यस्या पञ्चाङ्ग्यां यत् कथितं तत्सर्वं सत्य प्रमाणं च मन्यते यस्तस्य सम्यक्त्वं शुद्धमिति ज्ञेयमिति ॥ श्री आगमसाधनमीमांसा छन्दद्वयो द्वितीयकाव्यार्थ ॥ २ ॥

उद्देश प्रमुखाः सुशास्त्रकथिता प्रोक्तांश्चतु संविदां
नो किन्तु श्रुतसंविद सदनुयोगद्वार सूत्राक्षरात् ।
ज्ञात्वा योगविधानदक्षमतिभिः साधूत्तमैः सन्ततं
श्रीयोगोद्वहने ध्रुव शिवयुतैः स्नेहः प्रधार्यो मुदा ॥ ३ ॥

उद्देश प्रमुखा इति उद्देशः १ प्रमुखशब्देन समुद्देशः २ अनुज्ञा ३ अनुयोगः ४ एतेऽपि प्राक्ताः चकारौ पादपूरणे ते चत्वारोऽपि कीदृशाः शुभशास्त्रकथिता शोभन जैन शास्त्रेषु निगदितास्ते चतुः संविदाम चतुर्ज्ञानानां मतिज्ञानावधिज्ञान मन पर्यायज्ञान केवलज्ञाना भिधानानां नो नहि प्रोक्ता जिनैरिति शेषः किन्तु ते पूर्वोक्ता उद्देशादयश्चत्वारः श्रुतसंविदः श्रुतज्ञानस्यैव नान्येषां ज्ञानानां तथा पठनपाठ- नार्थोऽपि श्रुतज्ञानस्यैवेत्याद्यधिकार सदात् श्रेष्ठात् सदनुयोगद्वारसूत्रात् सुन्दराऽनुयोगद्वारा इत्यसूत्रात् ज्ञात्वा विज्ञाय साधूत्तमाः साधुसत्तमास्तैः कीदृशैः साधूत्तमै योगविधानदक्षमतिभिः यो ग्वहन श्रेष्ठबुद्धिभि योगोद्वहनं विधाय साधुभिरागमाराधनीया नान्यथेति शुद्धबुद्धिमद्भि रित्यर्थ पुन कीदृशै साधूत्तमैः शिवयुतैः कल्याणयुक्तैः सन्ततं निरन्तरं मुदा हर्षेण ध्रुवं निश्चयं श्रीयोगोद्वहने श्रीयोगकरणे स्नेह अन्तः प्रीतिः प्रधार्य प्रकर्षेण धारणीय अस्माभियागवहनं निविधायैव आगमाराधनीया इत्यर्थ इति भावार्थ । अथ विस्तरार्थः अनुयोग

द्वारसूत्रे उद्देशादयश्चत्वारः प्रोक्ताः श्रुतज्ञानस्यैव तथा कालग्रहणस्य विधिः प्रोक्तस्तथा चानुयोगद्वार सूत्रपाठः । नाणं पंचविहं पण्णत्तं तंजहा आभिणिबोहियनाणं १ सुअनाणं २ ओहिनाणं ३ मणपज्जवनाणं ४ केवलनाणं ५ तत्थ चत्तारि नाणाइ ठप्पाइ ठवणिज्जाइणो उद्दिसिज्जंतिणो समुद्दिसिज्जन्तिणो अणुन्न विज्झन्ति सुअनाणस्स उद्देसो समुद्देसो अणुन्ना अणुओगो ४ पवत्तइ जइ सुअनाणस्स उद्देसो समुद्देसो अणुन्ना अणुओगो ४ पवत्तइ "जइ सुअना" अंगवाहिरस्स उद्देसो ४ अंगपविट्ठस्स वि उद्देसो ४ इमं पुण पट्ठवणं पडुच्च अंगवाहिरस्स जावपवत्तइ अणंगपविट्ठस्स वि उद्देसो जावपवत्तइ इमं पुण पट्ठवणं पडुच्च अणंगपविट्ठस्स अणुओगो जइ अणंगपविट्ठस्स अणुआगो किं कालिअस्स अणुओगो उक्कालिअस्स अणुओगो कालिअस्स वि अणुओगो उक्कालिअस्स वि अणुओगो । अथ पूर्वोक्तपाठस्य किञ्चिदर्थो यथा ज्ञानं पञ्चविधं प्रज्ञप्तं तद्यथा आभिनिबोधिकज्ञानं मतिज्ञानमित्यर्थः तथा श्रुतज्ञानं तथाऽवधिज्ञानं तथा मनःपर्यायज्ञानं तथा केवलज्ञानं तत्र चत्वारि ज्ञानानि स्थाप्यानि स्थापनीयानि तत्र उद्देशः सामान्यकथनं स न चतुर्ज्ञानानां तथा समुद्देशो विशेष कथनं तदपि न चतुर्ज्ञानानां किन्तु श्रुतज्ञानस्यैव तथाऽनुज्ञाऽपि न भवति अर्थात् उद्देशसमुद्देशानुज्ञा सम्बन्धिनी क्रियापि न भवतीत्यर्थः यतोमतिज्ञानावधिमनःपर्यायकेवलाभिधानानां चतुर्णां ज्ञानानामादानमर्पणं नहि भवति ततः श्रुतज्ञानस्योद्देशः समुद्देशोऽनुज्ञाऽनुयोगश्च प्रवर्त्तते किमङ्गप्रविष्टस्योद्देशः समुद्देशोऽनुज्ञाऽनुयोगश्च प्रवर्त्ततेकिं वांगबाह्यस्योद्देशःसमुद्देशोऽनुज्ञानुयोगः प्रवर्त्ततेयतः श्रुतज्ञानस्याङ्गप्रविष्टान्याचारांगादीनि सूत्राणि सन्ति तथाङ्गबाह्यान्यावश्यकादीनि सूत्राण्यऽपि सन्ति तेन प्रश्नद्वयं कृतमित्यादि तथा चोक्तं श्रीअनुयोगद्वारसूत्रबृहद्वृत्तौ पूर्वोक्तपाठव्याख्यायां मलधारिगच्छालङ्कार श्रीहेमचन्द्रसूरिभिस्तत्पूर्वोक्तसूत्रवृत्तिदेशो यथा यदिनामज्ञानं पञ्चविधं प्रज्ञप्तं ततः किमित्याह तथेत्यादि तत्र तस्मिन् ज्ञानपञ्चके आभिनिबोधिकावधिमनःपर्यायकेवलाख्यानि चत्वारि ज्ञानानि ठप्पाइत्ति स्थाप्यान्यसंव्यवहार्याणि व्यवहारनयो हि यदेव लोकस्योपकारे वर्त्तते तदेव संव्यवहार्यं मन्यते लोकस्य च हेयोपादेयेष्वर्थेषु निवृत्तिप्रवृत्तिद्वारेण प्रायः श्रुतमेव साक्षादत्यन्तोपकारि यद्यपि केवलादि दृष्टमर्थं श्रुतमभिधत्ते तथापि गौणवृत्त्या तानि

स्याकापकारीणीति भावः यदुक्तन्यायेनासंव्यवहार्याणि तानि तम किमित्याह । ठवणिज्जा इति तत स्थापनियानि एतानि तथा विभापका राभावतो सम्यग्पदार्थत्वा तिष्ठन्तु न तेरिहोद्देशसमुद्देशाद्यवसर विचार इत्यर्थः अथवा स्थाप्यान्यमुखराणि स्वस्वरूपप्रतिपादनेऽप्यसमर्थानि नहि शब्दमन्तरेण स्वस्वरूपमपि केवलादीनिप्रतिपादयितुं समर्थानि शब्दभानन्तरमेव श्रुतत्वनाक्त इति स्वपरस्वरूपप्रतिपादने श्रुतमेव समर्थं स्वरूपकथने चेत्यत स्थाप्यानि अमुखराणियानि चत्वारि ज्ञानानि तानीहानुयोगद्वार विचारप्रक्रमे किमित्याह अनुपयोगित्वात् स्थापनीया-न्यनधिकृतानि यत्रैव उद्देशसमुद्देशानुज्ञादय क्रियन्ते यत्रैवाऽनुयोगस्य द्वाराणि चापक्रमादीनि प्रवर्त्तन्ते एवम्भूतं त्वाचारादिश्रुतज्ञानमेवेत्यत उद्देशाद्यविषयत्वादनुपयोगीनि शेषज्ञानानि इत्यतोऽनधिकृतानि अप्रधानुयोगो व्याख्यानं तच्च शेषज्ञानचतुष्टयस्यापि भवत्तत्र एवति कथ मनुपयोगित्वं ननु समयपर्यानिभिज्ञता सूचकमेव यथा यतोऽत्रापि तज्ज्ञानप्रतिपादकसूत्र सन्दर्भ एव व्याख्यायते स च श्रुतमेवानि श्रुतस्यैवानुयोगप्रवृत्तिरिति अथवा स्थाप्यानि गुरुंनधीतत्वनाद्यमप्यविषयभूतान्ये तदेव विवृणोति स्थापनीयानीत्यर्थो द्वावपि न्यमुक्तं भवति अनेकार्थत्वादतिगम्भीरत्वादिविषमस्मात्यतिशयसम्पन्नत्वाच्च प्रायो गुरूपदेशापेक्षं श्रुतज्ञानं तच्च गुरोरन्तिके गृह्यमाणं परमकल्याणका-रणत्वादुद्देशादिविधिना ग्रहणं इति तस्योद्देशादयः प्रवर्त्तन्ते शेषाणि तु चत्वारि ज्ञानानि तदावरणकर्मक्षयक्षयोपशमाभ्यां स्वतएव जायमानानि नोद्देशादिविधिक्रममपेक्षन्ते यतश्चैवमत आह नो उद्दिसिज्जन्तीत्यादिना उद्दिश्यन्ते नो समुद्दिश्यन्ते नो अनुज्ञायन्ते तदेवमध्ययनादि त्वया पठितव्यमिति गुरुवचनविशेष उद्देशः तस्मिन्नेव शिष्येण हीनादिलक्षणापेतेऽधीते गुरोर्निवेदिते स्थिरपरिचितं कुर्विदमिति गुरुवचनविशेष एव समुद्देशस्तथा कृत्वा गुरोर्निवेदिते सम्यगिदं धारयान्यांश्चाध्यापयेति तद्वचनविशेष एवानुज्ञा सुयणाणस्सेत्यादि श्रुतज्ञानस्योद्देश समुद्देशा ऽनुज्ञा अनुयोगश्च प्रवर्त्तन्ते तत्रोद्देशादीनां त्रयाणां स्वरूपसंक्षेपत उक्तमपि विनेयानुग्रहार्थं किञ्चिद्विस्तरतः उच्यते तत्राचाराद्यङ्गस्य उत्तरा ध्ययनादिकालिकश्रुतस्कन्धस्य औपपातिकाद्युत्कालिकोपाङ्गाध्ययनस्य चायमुद्देशविधिः आचाराद्यन्यतर श्रुतमध्येतुमिच्छति या विनेय

सस्वाध्यायं प्रस्थाप्य गुरुं विज्ञपयति भगवन्नमुकं मम श्रुतमुद्दिशत गुरुरपि भणतीन्छाम इति ततो विनेयो वंदनकं ददाति १ ततो गुरुरुत्थाय चैत्यवन्दनं करोति तत ऊर्ध्वस्थितो वामपार्श्वीकृतशिष्यो योगोत् क्षेपनिमित्तं पञ्चविंशत्युच्छ्वासमानं कायोत्सर्गं करोति चंदेसु निम्मलयरेति यावच्चतुर्विंशति स्तवं चिन्तयतीत्यर्थः ततः पारितकायोत्सर्गः सम्पूर्णचतुर्विंशति स्तवं भणित्वा तथा स्थित एव पञ्चपरमेष्ठि नमस्कारं वारत्रयमुच्चार्य नाणं पंचविहं पण्णत्तमित्यादि उद्देशनन्दी भणति तदन्ते चेदं पुनः प्रस्थापनं प्रतीत्य साधोरिदमङ्गममुं श्रुतस्कन्धं इदमध्ययनं वा उद्दिशामि क्षमाश्रमणानां हस्तेन सूत्रमर्थं तदुभयं च उद्दिष्टमित्येवं वदति क्षमाश्रमणानामित्यादि त्वात्मनो अहंकारवर्जनार्थ-मभिधत्ते ततो विनेय इच्छामीति भणित्वा वन्दनकं ददाति २ तत उत्थितो ब्रवीति सन्दिशत किं भणामीति ततो गुरुर्वदति वन्दित्वा प्रवेदयति ततो विनेय इच्छामीति भणित्वा वन्दनकं ददाति ३ ततः पुनरुत्थितः प्रतिपादयति भवद्भिर्ममामुकं श्रुतमुद्दिष्टमिच्छाम्यनुशास्ति ततो गुरुः प्रत्युत्तरयति योगं कुर्विति एवं सन्दिष्टो विनेय इच्छामीनि भणित्वा वन्दनकं ददाति ४ ततो अत्रान्तरे नमस्कारमुच्चारयन्नसौ गुरुं प्रदक्षिणयति तदन्ते च गुरोः पुरतः स्थित्वा पुनर्वदति भवद्भिर्ममामुकं श्रुतमुद्दिष्टमिच्छाम्यनुशास्ति ततो गुरुराह योगं कुर्विति एवं सन्दिष्ट इच्छामीति भणित्वा वन्दित्वा च पुनस्तथैव गुरुं प्रदक्षिणयति तदन्ते च पुनस्तथैव गुरुशिष्ययोर्वचनप्रतिवचने तथैव च तृतीयप्र-दक्षिणां विदधाति विनेयः एतानि च चतुर्थवन्दनकादीनि त्रीण्यपि वन्दनकान्येकमेव चतुर्थं गण्यते एकार्थप्रतिबद्धत्वादिति २ ततस्तृतीय प्रदक्षिणान्ते गुरुर्निषीदति निषण्णस्य च गुरोः पुरतोऽर्द्धावनतगात्रो विनेयो वक्ति युष्माकं प्रवेदितं संदिशतसाधूनां प्रवेदयामि ततो गुरुराह प्रवेदयेति तत इच्छामीति भणित्वा विनेयो वन्दनकं ददाति ५ प्रत्युत्थितश्चोच्चारित पञ्चपरमेष्ठिनमस्कारः पुनर्वन्दनकं ददाति ६ पुनरुत्थितो वदति युष्माकं प्रवेदितं साधूनां च तं प्रवेदितं सन्दिशन करोमि कायोत्सर्गं ततो गुरुरनुजानीते कुर्विति ततः पुनरपि वन्दनकं ददाति ७ एतानि सप्तच्छोभवन्दनकानि श्रुतप्रत्ययानि भवन्ति ततः प्रत्युत्थितो अभिधत्ते अमुकस्योद्देशनिमित्तं करोमि कायोत्सर्गं

मन्यमोऽष्ठ्युँसिता इत्यादि यावदुम्मुत्तनामीति ततः कायोत्सर्गे स्थितः सप्तविंशतिमुच्छ्वासांश्चिन्तयति सागरवरगम्भीरेति यावच्चतुर्विंशति-
स्तवं चिन्तयति इत्यर्थः उद्देशसमुद्देशे सत्तावीसं अणुम्मवणियाए इति वचनात् ततः पारितकायोत्सर्गः सम्पूर्णं चतुर्विंशतिस्तवं भणित्वा
परिसमाप्तोद्देशक्रियत्वाद्गुरोः ज्योमवन्दनकं ददाति तच्च न भुक्तमस्यर्थं किं तर्हि मुखदानस्वादिना गुरुः परमोपकारी तद्विनयप्रतिपत्तिनिमि-
त्तमिति अङ्गादिसमुद्देशेष्यप्ययमेव विधिर्वक्तव्यो नवरं पूर्वमवेदिते योगं कुर्विस्तुक्कमम तु स्थिरपरिचितं कुर्विति वदति योगोत्क्षेपकायोत्सर्ग
नन्याकर्षणं प्रदक्षिणात्रयविधिश्च न क्रियते शेषः सर्व वन्दनकादिको विधिस्तथैव अनुज्ञाविधिस्तु योगात्क्षेपकायोत्सर्गं वर्जः सर्वोऽप्युद्देशवि-
धिवद्वक्तव्यो नवरं प्रवेदिते गुरुर्वदति सम्यग् धारयान्येषां च प्रवेदय अन्यानपि पाठयेत्यर्थः आवश्यकादिषु तण्डुलविचारणादिप्रकीर्णकेष्वपि
चैष एव विधिर्नवरं स्वाध्यायप्रस्थापनं योगोत्क्षेपकायोत्सर्गश्च न क्रियते एवं सामायिकाध्ययनेषूद्देशकेषु च चैत्यवन्दनप्रदक्षिणा त्रयात्रि-
विक्षेपक्रियारहित सप्तवन्दनक प्रदानादिकः स एव विधिरिति तावदियं चूर्णिकारलिखिता सामाचारी साम्प्रतं पुनरन्यथापिता सम्प्रपद्य-
म्पन्ते न च तयोपलभ्य सम्मोहः कर्तव्यो विधिभस्मात्सामाचारीणामिति इदानीमनुयोग विधिरुच्यते तत्रानुयोगो वस्यमाणस्वार्थं स
यदाचीतसूत्रस्याचार्ये प्रस्थापनयोग्यस्य शिष्यस्यानुज्ञाप्यते तदार्थं विधिः प्रशस्तेषु तिथिनक्षत्र करणमुहूर्तेषु प्रशस्ते च जिना यतनादौ
क्षेत्रे सूत्रं प्रमाज्यं एकाग्रस्यात्मैका शिष्याणामिति निषद्याद्वयं क्रियते ततः प्राभातिककाले प्रवेदिते निषद्यानिषण्णस्य गुरोर्मोक्षपट्टकरजो
हरणमुखवस्त्रिका मात्रोपकरणो विनेयः पुरतोऽवतिष्ठते ततो द्वावपि गुरुशिष्यौ मुखवस्त्रिकां प्रत्युपेक्षयतस्तया च समग्र शरीरं प्रत्युपेक्षयतस्ततो
विनेयो गुरुणा सह द्वादशा वर्तवन्दनकं दत्वा वदति इच्छाकारेण सन्दिशत स्वाध्यायं प्रस्थापयामि ततश्च द्वावपि स्वाध्यायं प्रस्थापयतः ततः
प्रस्थापिते स्वाध्याये गुरुर्निषीदति ततः शिष्यो द्वादशावर्तवन्दनकं ददाति ततो गुरुरुत्थाय शिष्येण सहानुयोगप्रस्थापननिमित्तं कायोत्सर्गं करोति
ततो गुरुर्निषीदति ततः स शिष्यो द्वादशावर्तवन्दनकेन वन्दते ततो गुरुस्तानभिमन्त्र्योत्तिष्ठत्युत्थाय च निषद्यां पुरतः कृत्वा वामपार्श्वीकृत

शिष्यश्चैत्यवन्दकं करोति ततः समाप्ते चैत्यवन्दनेषु ३ गुरुरूर्ध्वस्थित एव नमस्कारपूर्वं नन्दिमुच्चारयति तदन्ते चाभिधत्ते मां साधोरनुयोगमनुजानामि क्षमाश्रमणानां हस्तेन द्रव्यगुणपर्यायैरनुज्ञातस्ततो विनेयः च्छोभवन्दनकेन वन्दते उत्थितश्च ब्रवीति संदिशतः किं भणामि ततोगुरुराह वन्दित्वा प्रवेदय ततो वन्दते शिष्य उत्थितस्तु ब्रवीति भवद्भिर्ममानुयोगोऽनुज्ञात इच्छाम्यनुशास्ति ततो गुरुर्वदति सम्यग् धारय अन्येषां च प्रवेदय अन्येषामपि व्याख्यानं कुर्वित्यर्थः ततो वन्दते असौ वन्दित्वा च गुरुं प्रदक्षिणयति प्रदक्षिणान्ते च भवद्भिर्ममानुयोगोनुज्ञात इत्याद्युक्तिप्रत्युक्तिर्द्वितीयप्रदक्षिणा च तथैव पुनस्तृतीयापि तथैव ततस्तृतीयप्रदक्षिणांते गुरुर्निषीदति तत्पुरःस्थितश्च विनेयोवदति युष्माकं प्रवेदितं सन्दिशतसाधूनां प्रवेदयामीत्यादि शेषमुद्देशविधिवद्वक्तव्यं यावदनुयोगानुज्ञा निमित्तं कायोत्सर्गं करोति तदन्ते च स निषद्यः शिष्यो गुरुं प्रदक्षिणयति तदन्ते च वन्दते पुनः प्रदक्षिणयत्येवं तिस्रो वारास्ततो गुरोर्दक्षिणभुजासन्ने निषीदति ततो गुरुपारंपर्यं एतानि मन्त्रपदानि गुरुस्तिस्रो वाराः शिष्यस्य कथयति तदन्तरं प्रवर्द्धमानाः प्रवरं सुगन्धमिश्रास्तिस्रोऽक्षमुष्टीस्तस्मै ददाति ततो निषद्याया गुरुरुत्थाय शिष्यं तत्रोपविश्य यथा सन्निहितसाधुभिः सह तस्मै वन्दनकं ददाति ततो विनेयो निषद्यास्थित एव नाणं पंचविहं पन्नतमित्यादि सूत्रमुच्चार्यं यथाशक्ति व्याख्यानं करोति तदन्ते च साधून् वन्दनकं ददाति ततः शिष्यो निषद्यातः उत्तिष्ठति गुरुरेव पुनस्तत्र निषीदति ततो द्वावप्यनुयोग विसर्गार्थं कालप्रतिक्रमणार्थं च प्रत्येकं कायोत्सर्गं कुरुतः ततः शिष्यो निरुद्धं प्रवेदयति निरुद्धं करोतीत्यर्थः एवं श्रुतस्यैव उद्देशादयः प्रवर्त्तन्ते न शेषज्ञानानामत्र चानुयोगेनैवाधिकारो न शेषैरनुयोगद्वारविचारस्यैवेह प्रक्रान्तत्वादत्र यथाभिहितमुपजीव्याह शिष्यो यदीत्यादि यद्युक्तक्रमेण श्रुतज्ञानस्योद्देशः समुद्देशोनुज्ञा अनुयोगश्च प्रवर्त्तते तर्हि किमसावङ्ग प्रविष्टस्य प्रवर्त्तते उताङ्गबाह्यस्येति तत्राङ्गेषु प्रविष्टमन्तर्गतमङ्गप्रविष्टं श्रुतमाचारादि तद्बाह्यमुत्तराध्ययनादि अत्र गुरुर्निर्वचनमाह अंगपविठ्ठस्स वीत्यादि अपि शब्दौ परस्प रसमुच्चयार्थौ अङ्गप्रविष्टस्याप्युद्देशादि प्रवर्त्तते तद्बाह्यस्यापि इदं पुनः प्रस्तुतं प्रस्थापनं प्रारम्भं प्रतीत्याश्रित्याङ्गबाह्यस्य प्रवर्त्तते नेतरस्य आवश्यकं यत्र व्याख्यास्यते

तथाध्ययनमेवेति भावः अथाध्ययनमेवेति सामान्योक्तौ सत्यां संशयानो विनेय आह जइ अंगबाहिरस्सेत्यादि यद्यङ्गबाह्यस्योद्देशादिः किमसौ कालिकस्य प्रवर्त्तते उत्कालिकस्य वा द्विधाप्यङ्गबाह्यस्य सम्भवादिति भावस्तत्र दिवसनिशा प्रथमचरमपौरुषी लक्षणे काले पीयते नान्यथेति कालिकमुत्तराध्ययनादि यत्तु कालवेला मात्रवर्ज शेषकालानियमेन पठ्यते तदुत्कालिकमावश्यकादि अत्र गुरुःप्रतिवचनमाह कालियस्स पीत्यादि कालिकस्याप्यसौ प्रवर्तते उत्कालिकस्यापि इदं पुनः प्रस्तुतं प्रस्थापनं प्रारम्भं प्रतीत्य उत्कालिकस्यासामन्तव्याः आवश्यकमेव यत्र व्याख्यास्यते यथोत्कालिकमेवेति द्वयं उत्कालिकस्येति सामान्य वचने विशेषजिज्ञासुः पृच्छति जई उत्कालियस्सेत्यादि यद्युत्कालिकस्योद्देशादिस्तत्किमावश्यकस्यायं प्रवर्त्तते तथावश्यकव्यतिरिक्तस्य उभयथाप्युत्कालिकस्य सम्भवादिति परमार्थस्तत्र श्रमणैः श्रावकैश्चोभयसन्ध्यमवश्यं करणादावश्यकं सामायिकादि षडध्ययनकलाप तस्मात्तु व्यतिरिक्तं भिन्नं दशवैकालिकादि गुरुराह आवस्सगस्स वीत्यादि द्वयोरप्येतयोः सामान्येनोद्देशादि प्रवर्त्तते किन्त्विदं प्रस्तुतं प्रस्थापनं प्रारम्भं प्रतीत्यावश्यकस्यानुयोगोनेतरस्य सकलसामाचारी मूलत्वादस्यैव शेषपरिहारेण व्याख्यानादिति भावनीयं उद्देशसमुद्देशानुज्ञास्त्वावश्यके प्रवर्त्तमाना अप्यत्र नाधिकृता अनुयोगावसरत्वादतस्तत्परिहारेणोक्तमित्यनुयोगद्वारसूत्रवृत्तिवचनात् साधुभिरेव सिद्धान्ता वाचनीयास्तत्रापि कालग्रहणादियोगक्रियाकारकैः साधुभिरेव नान्यैरिति ततः श्रावकाणां तु का कथा तीर्थकराज्ञापालकाः श्रावकास्तु सिद्धान्तान् नहि वाचयन्ति श्राद्धानामागमपठनं जैनागमेषु निषिद्धत्वादिति विस्तरार्थः ॥

इति श्रीमत्पंन्यासरूपविमलजित्सुशिष्यपंन्यासश्रीसौभाग्यविमलजिद्विनेयमुक्तिविमलेन विरचितायां स्थापनाऽऽगमवाचनमीमांसायां तृतीयोऽध्यायः ॥

उद्देशप्रमुखांश्च यः पठति वै त्यक्तक्रमः सोऽपि च
ज्ञानाशातनिकां करोति च पुनर्बध्नाति वित्संवृतम् ।
इत्येवं कथितं वरे सुभगवत्यङ्गेऽर्थसार्थान्विते
तेनोद्देशमुखाश्च सुक्रमयुतैः पाठ्याः सुवाचं यमैः ॥ ४ ॥

अथ चतुर्थकाव्य व्याख्यामाह । यः साधुः कीदृशः त्यक्तक्रमः उद्देशप्रमुखपठने क्रमोऽनुक्रमः त्यक्तोयेन उद्देशादि क्रमं विना सिद्धान्ताभ्यासकारकः इत्यर्थः तादृक् त्यक्तक्रमः यः साधुः उद्देशप्रमुखाणि उद्देशसमुद्देशादीनि पठति वै निश्चये चकारः पादपूरणे सोऽपि साधुः ज्ञानाशातनिकां ज्ञानाशातनां करोति विदधाति च पुनः उद्देशप्रमुखाणि क्रमं विना पाठकः साधुः वित्संवृतं वित्ज्ञानं तस्य संवृत-मावरणं ज्ञानावरणीयंकर्म बध्नाति इत्येवमेवं रित्यावरे श्रेष्ठे सुभगवत्यङ्गे भगवतीसूत्राख्ये पञ्चमाङ्गे कीदृशे पञ्चमाङ्गे अर्थानां सार्थः समूहस्तेनान्विते गणधरैः कथितं प्रोक्तमस्ति तेन सुक्रमयुतैरुद्देशप्रमुखानुक्रमयुतैः सुवाचं यमैः सुसाधुभिरुद्देशप्रमुखाः पूर्वोक्ता अनुक्रमेणैव पठ्या भणितव्याः इति काव्यार्थः ॥ विशेषार्थस्त्वयं ॥ भगवतीसूत्रे ज्ञानावरणीयकर्मबन्धकारणं भगवान् गौतमस्वामिना पृष्टं तत्सूत्रपाठो यथा नाणावरणिज्ज-कम्मसरीरप्पगओगबंधेणं भंते कस्स कम्मस्स उदयेणं गोयमा नाणपडिणीयाए नाणनिण्हवणयाए नाणंतराणं नाणप्पओसेणं नाणासायणाए नाणविसंवायणा योगेणं नाणावरणिज्जकम्मसरीरप्पओगं बंधइ इति अथैतत्पाठस्य शब्दार्थो यथा नाणावरणीज्जइत्यादि ज्ञानावरणीयकर्मनाम यच्छरीरस्य प्रयोकसाबन्धः स कस्य कर्मणः उदयेन बध्नाति ज्ञानावरणीयं कर्म केन बध्नातीत्यर्थः इति गौतमस्वामिना पृष्टे भगवान् प्राह । हे गौतम ? नाणपडिणीयाए ज्ञानस्य प्रत्यनीकत्वेन अनिष्टाचरितेन ज्ञानावरणीयं कर्मबध्नाति तथा नाणनिण्हवणयाए ज्ञानस्योल्लापनं ओल्लवुं

इति लोके प्रसिद्धं तथा ज्ञानज्ञानिनोः कथञ्चिदभेदोपचारात् यस्य पार्श्वे ज्ञानमधीतं तस्य च ज्ञानस्योल्लापनेन तत्कर्म बध्नाति तथा नाणं तरायएणं ज्ञानान्तरायकरणेन अर्थात् ज्ञानपाठकस्याहारजलवस्त्रोपाश्रयस्थानलाभनिषेधकरणेन तथा नाणप्पओसेणं ज्ञानप्रद्वेषेण ज्ञानज्ञानिनो रुपरि मन्त्वभीतेररसणेन तथा नाणासायणाए ज्ञानाशातनाकरणेन ज्ञानिनामवहेलनेन तथा नाणविसंवायणाजोगेणं ज्ञानस्य विसंवादो विपरीतप्ररूपणा तथा नाणावरणीज्ज इत्यादि एवं अनेन जीवः ज्ञानावरणीयं कर्म बध्नाति इति भगवतीसूत्रे तथा भगवतीप्रमुखसूत्राणामन्तभागे क्षयोपशमविधिः संक्षेपतः कथितस्तद्विशेषोऽप्यत्र भव्यजीवोपकाराय संक्षेपतः कथयामः तथा च तत्पाठः पन्नत्तीए आइमाणं अट्ठण्हं सयाणं दोदो उद्देसगा उद्दिसिज्जंति णवरं चउत्थसयं पढमे दिवसे अट्ठ बितीयदिवसे दो उद्दिसिज्जंति, नवमाओ सयाओ आरद्धं जावइयं पावे तावइयं उद्दिसिज्जइ उक्कोसेणं सयं एगदिवसेणं मज्झिमेणं दोहिं दिवसेहिं सयं जहन्नेणं तिहिं दिवसेहिं सयं एवं जाववीसइमं सयं णवरं गोसालो एग दिवसेणं उद्दिसिज्जति जइ सो थिरो एगदिवसेणं समुद्दिसिज्जइ अह न थिरो आयंबिलछट्ठेणं अणुन्नविज्जति इति अक्षरपाठस्य अर्थः यथा पन्नत्तीए प्रज्ञप्तौ भगवतीसूत्रे इति यावत् आइमाणं अट्ठण्हं सयाणं आदिमानां अष्टानां शतकानां दोदो उद्देसगा उद्दिसिज्जंति द्वौ द्वावुद्देशौ णवरं किञ्चिद्विशेषो यथा चउत्थसयं पढमे दिवसे अट्ठ० चतुर्थशतकस्य प्रथमदिवसे अष्टौ उद्देशाः बितीयदिवसे दो उद्देसा उद्दिसिज्जंति द्वितीयदिवसे द्वावुद्देशौ उद्देश्यौ नवमाओ सयाओ आरब्भ अथ नवमशतकादारभ्य जावइयं पावे यावन्तं सूत्रपाठं पठति तावइयं उद्दिसिज्जइ तावान् उद्देश्यः उक्कोसेणं सयं एगदिवसेणं उत्कृष्टतः एकेन दिवसेन शतकं मज्झिमेणं दोहिं दिवसेहिं सयमिति मध्यमतः द्वाभ्यां दिवसाभ्यामेकं शतकमुद्देश्यं जघन्यतस्त्रिभिर्दिवसैरेकं शतकमुद्देश्यं एवं जाव वीसइ मंसयमिति विंशतितमशतकं यावज्ज्ञेयं णवरमिति नवरं गोसालो एगदिवसेणं उद्दिसिज्जति गोशालकस्य पञ्चदशं शतकमेकेन दिवसेनोद्देश्यं जइ सो थिर यदि सः बुद्धिमान् भवेत्तर्हि एग दिवसेणं अणुन्नविज्जति एकेन दिवसेनाऽनुज्ञा कार्या अह न थिर उपविष्टबुद्धिमान् न भवेत्तर्हि आयंबिलछट्ठेण अणुन्नविज्जति

द्वाभ्यामाचाम्लाभ्यामनुज्ञा कार्या यतः पूर्वं यः साधुः यावन्तं सूत्रपाठं पठेत् तावन्तीमेव क्रियां कारयित्वा शिष्यं सद्गुरुः सूत्रपाठमपाठयदिति भावः तेनैवं कथितं यत् द्वाभ्यां दिवसाभ्यां द्वयोराचाम्लयोः क्रियां कारयित्वाऽनुज्ञा कार्येति अथ सूत्रं एगविसबावीतेवीस इमाई सयाई एकेक्कदिवसेणं उद्दिसिज्जंति एकविंशतितमद्वाविंशतितमत्रयोविंशतितमशतकानि एकेनदिवसेनोद्देश्यानि इत्यादि योगवहनविधिस्तु योगविधिग्रन्थप्रमुखतोऽवसेयः आधुनिककाले तु पूर्वशुद्धसामाचारी भेदतस्तथा कालभेदतः योगवहनक्रियाभिन्नरीत्याऽपि दृश्यते परं न च तथोपलभ्यसन्देहः कर्त्तव्यो विचित्रत्वात् सामाचारीणामिति विस्तरार्थः ॥

इति श्रीमत्पंन्यासदयाविमलजित्सुशिष्यपंन्यासश्रीसौभाग्यविमलजिद्विनेयमुक्तिविमलेनविरचितायांस्वोपज्ञाऽऽगमवाचनमीमांसावृत्तौ चतुर्थकाव्यार्थः ॥ ४ ॥

श्रीनन्द्यां किल चोत्तराध्ययनके सूत्रे पुरोगेऽनुयुग्<br>
योगद्वारवरे च सम्प्रकथितः योगान्वितानां खलु ।<br>
सत्कालग्रहणस्य सर्वसुविधिः शुद्धोपयोगान्वितैः<br>
धार्यो धैर्यधरैः सुसाधुवृषभैः श्रद्धेयमर्हद्वचः ॥ ५ ॥

अथ पञ्चमकाव्यव्याख्यामाह । श्रीनन्द्यामिति किलेति निश्चये चकारः पादपूरणे वा पुनरर्थे योगान्वितानां योगकर्तॄणां साधूनां खलु अवधारणे सत्कालग्रहणस्य शुद्धकालग्रहणस्य सर्वसु विधिः समस्तविधिः श्रीनन्द्यां श्रीनन्दीसूत्रे चकारः पुनरर्थे उत्तराध्ययनके सूत्रे उत्तराध्ययननाम्नि सूत्रे तथा पुरोगे श्रेष्ठे अनुयुग् योगद्वारवरे अनुयोगद्वारसंज्ञके सूत्रे गणधरैः सम्प्रकथितः सम्यक् प्रकर्षेण कथितः प्रोक्त-

स्तदिमिः शुद्धोपयोगान्वितैः निर्मलोपयोगसहितैः तथा धैर्यं परीषहेषु धैर्यवरास्तैः धैर्यवरैः शुद्धाशुद्धपथैः सत्साधुषु रूपमतुल्यैः यायैस्तथा भद्रकल्याणकरवचनं श्रद्धेयमिति सम्बन्धः ॥ अथ विस्तरार्थः । नन्दिसूत्रेऽपि उद्देशसमुद्देशानुज्ञेत्यादि योगवहनक्रिया प्रभापिता तथा च तत्पाठः सेयं अंगट्ठयाए पढमे अंगे दोसुयक्खंधा पणवीसं अज्झयणा पंचासीई उद्देसणकाला पंचासीई समुद्देसणकाला अट्ठारसपयसहस्साणि पयग्गेणं इत्यादि पाठः एतत् पाठटीकायां यदुक्तं श्रीमलयगिरिसूरिभिस्तट्टीका पाठो यथा आचारोऽयमिति वाक्यालङ्कारे । अङ्गार्थतया अङ्गार्थत्वेनाधिकरणं परलोकचिन्तायां सूत्रार्थस्य मरीयस्त्वस्थापनार्थं अथवा सूत्रार्थोभयरूप आचारः इति स्थापनार्थं प्रथमं प्रकारान्तता सर्वत्र मागधभाषा लक्षणा तु तस्मात् द्वितीया स्थापनामधिकृत्य प्रथममङ्गमित्यर्थः तथा द्वौ श्रुतस्कन्धौ अध्ययनसमुदायरूपौ पञ्चविंशति रध्ययनानि तद्यथा ॥ सत्थपरिन्ना लोगविजओ सीओसणिज्जं सम्मत्तं आवंति धुयविमोहो महापरिन्नो उवहाणसुयं एतानि नवाध्ययनानि प्रथमश्रुतस्कन्धे पिंडेसण सिज्जिरियाभासज्जायापायवत्थपाएसा ओग्गहपडिमा सत्तसत्तिक्कयाय भावणविमुत्ता अत्रसेज्जिरियति शय्याध्ययनं ईर्याध्ययनं च वस्त्रपात्रसत्ति वस्त्रैषणाध्ययनं पात्रैषणाध्ययनं च अमूनि षोडशाध्ययनानि द्वितीयश्रुतस्कन्धे एवमेतानि निशीथवर्जानि पञ्चविंशतिरध्ययनानि भवन्ति तथा पञ्चाशीतिरुद्देशनकालाः कथमिति चेदुच्यते । इहाद्यस्य श्रुतस्कन्धस्याध्ययनस्योद्देशकस्य चैक एवोद्देशनकालः एवं शस्त्रपरिज्ञायां सप्तोद्देशनकालाः लोकविजये षट् शीतोष्णाध्ययने चत्वारः सम्यक्त्वाध्ययने चत्वारः लोकसाराध्ययने षट् धुताध्ययने पञ्च विमोहाध्ययनेऽष्टौ महापरिज्ञायां सप्त उपधानश्रुते चत्वारः पिण्डैषणायामेकादश शय्यैषणाध्ययने त्रयः ईर्याध्ययने त्रयः भाषैषणाध्ययने द्वौ वस्त्रैषणाध्ययने द्वौ पात्रैषणाध्ययने द्वौ अवग्रहप्रतिमाध्ययने द्वौ सप्तसप्तिकाध्ययनेषु भावनायामेको विमुक्तावेकः एवमेते सर्वेऽपि पिण्डिताः पञ्चाशीतिर्भवन्ति अत्र संग्रहगाथा सत्तयछच्चउ चउरोयछच्चपचमट्ठेव सत्तचउरोय एक्कारतियतिदोदो सत्तेक्कएकोय एवं समुद्देशनकाला अपि पञ्चाशीतिर्भावनीयाः तथा सूत्रेण पदपरिमाणेनाष्टादशपदसहस्राणि इह यत्रार्थोपलब्धिस्तत्पदं अथवा

भाए यथाचारे द्वौ श्रुतस्कन्धौ पञ्चविंशतिरध्ययनानि पदाग्रेण चाष्टादशपदसहस्राणि तर्हि यद्भणितं नवबम्भचेरमइओ अट्ठारसपयसहस्सिओ वेड । इति तद्विरुध्यते तत्र हि नवब्रह्मचर्याध्ययनमात्र एवाष्टादशपदसहस्रप्रमाण आचार उक्तोऽस्मिंस्त्वध्ययने श्रुतस्कन्धद्वयात्मकः पञ्चविंशत्यध्ययनरूपोऽष्टादशपदसहस्रप्रमाण इति ततः कथं न परस्परं विरोधः तदयुक्तमभिप्रायापरिज्ञानात् इहद्वौश्रुतस्कन्धौ पञ्चविंशतिरध्ययनानि एतत्समग्रस्याचारस्य परिमाणं उक्तं अष्टादशपदसहस्राणि पुनः प्रथमश्रुतस्कन्धस्य नवब्रह्मचर्याध्ययनमयस्य विचित्रार्थनिबद्धानि हि सूत्राणि भवन्ति अत एव चैषां सम्यगर्थाधिगमो गुरूपदेशतो भवति नान्यथा तथा चाह चूर्णीकृत् दो सुयक्खंधा पणवीसं अज्झयणाणि एयं आयारग्गसहियस्स आयारस्स पमाणं भणियं अट्ठारसपयसहस्सा पुण पढम सुयक्खंधस्स नवबंभचेरमइयस्स पमाणं विचित्त अत्थनिबद्धाणि सुत्ताणि य गुरुवएसओसिं अत्थोजाणियव्वोत्ति तथा संख्येयान्यक्षराणि पदानां संख्येयत्वात्तथा अणंतागमा इति इह गमा अर्थ गमागृह्यन्ते अर्थगमानाम अर्थपरिच्छेदास्ते चानन्ताः इति श्रीनन्दिसूत्रवृत्तिवचनात् पंचासीइं उद्देससमुद्देसवचनेन यागनिर्गम्या उद्देशसमुद्देशाज्ञेयाः काला इति शब्देन कालग्रहणविधिर्ज्ञेयः इत्यादि बहवः सिद्धान्तपाठादृश्यन्ते तथा अनुयोगद्वारसूत्रे मूलेऽपि बहुपाठः स तु तद्वृत्तियुक्तस्तृतीयकाव्यव्याख्यायांप्रोक्तोभूयस्तुग्रन्थभूयस्त्वभयान्नलिख्यते तथा चाथ प्रतिपदमागमोक्तमपि सदयहृदयैः स हृदयैरागमोक्तयुक्तिभिर्बोध्यमानमपि योगोद्वहनमश्रद्दधतः कांश्चिदेवानां प्रियान्वीक्ष्यदूरबोधिबोधायाऽऽयंतीर्थंकरोप्यशक्त इति निष्पत्याशत्वेपि कथमपि भवत्प्रकार इति पुनर्योगाक्षराणि लिख्यन्ते तथा श्रीउत्तराध्ययन सूत्रस्यैकादशेऽध्ययनेऽपि प्रोक्तं तथा च तत्पाठः ॥ गाथा ॥ वसे गुरुकुले निच्चं जोगवं उवहाणवं पियंकरे पियंवाई ससिक्खं लद्धुमरहई ॥ १ ॥ इति तद्वृत्तिर्यथा वसे वासीतकगुरूणामाचार्यादीनां कुलमन्वयोगच्छ इत्यर्थः गुरुकुलं तत्र तदाज्ञोपलक्षणं च कुलग्रहणं नित्यं सदा किमुक्तं भवति यावज्जीवमपि गुर्वाज्ञायामेव तिष्ठेदुक्तञ्च, णाणस्स होइ भागी इत्यादि योगो व्यापारः स चेह प्रक्रमाद्धर्मगतः एवं तद्वानुपधानमङ्गानंगाध्ययनादौ यथा योगमाचा-

यदा अस्त समये यन्नक्षत्रमुदेति तस्मिन्नेवनक्षत्रेरात्रिसमाप्तिर्भवति तस्मिन्नेव नक्षत्रे आकाशस्य चतुर्थे भागे सम्प्राप्ते विरमिज्झा विरमेत् स्वाध्यायाद्विरमेदित्यर्थः पउसकालंमि प्रादोषिककाले रात्र्याः प्रथमप्रहरे प्रादोषिक कालग्रहणं वा घाइकालग्रहणं ग्राह्यमिति १ तम्मेवयनक्खत्ते गयणचउब्भाग सावसेसंमि वेरित्तियंपि कालं पडिलेहित्ता मुणि कुज्झा २ तद्व्याख्या रजनीमुखे वाघाइ कालग्रहणं कृत्वा पश्चात्पौरुष्यां प्रथमायां सूत्रस्वाध्यायं कुर्यात् तम्मेवयनक्खत्ते तस्मिन्नेव नक्षत्रे आकाशस्य चतुर्थभागे सावशेषे सति वै रात्रिकं नामकालग्रहणं विरतिकाल इति प्रसिद्धं तदपि कुज्झा० कुर्यात् गृह्णातीत्यर्थः तद्गृहीत्वा स्वाध्यायः कर्त्तव्यः एवमन्येष्वपिज्ञेयमिति २ पोरिसीए चउब्भागे वंदिताण तओ गुरुं अपडिक्कमित्ताकालस्स भायणंपडिलेहए ३ पौरुष्याश्चतुर्थभागे अवशेषे सति पादो न पौरुष्यां जातायां सत्यां षड्घटीपरिमित-दिवसे चटिते सति ततो गुरून् वंदित्वा भाजनं पात्रं प्रतिलेखयेत् किं कृत्वा कालस्य इति कालं अप्रतिक्रम्य प्राभातिककालप्रतिक्रमणार्थं कायोत्सर्गं अकृत्वा चतुर्थ्यां पौरुष्यां पुनः स्वाध्यायं करिष्यते कालप्रतिक्रमणानन्तरं स्वाध्यायकरणं अयुक्तं तस्मात् कालं अप्रतिक्रम्येत्युक्तं पाश्चात्यपौरुष्यां स्वाध्यायस्य कारकत्वात् कालमप्रतिक्रम्येति अत्र पाभाइ कालं ज्ञेयं ३ पोरिसीए चउब्भागे वंदित्ताण तओ गुरुं पडिकमित्ता कालस्स सिज्झंतु पडिलेहए १ तद्व्याख्या मुनिः पोरिसीए चउब्भेगे० पौरुष्या अर्थाद्दिवसस्य चतुर्थपौरुष्याश्चतुर्थभागे शेषे गुरुं वंदित्वा ततः स्वाध्यायादनन्तरं पडिकमित्ता कालस्स कालस्य कालं प्रतिक्रम्य तु पुनः शय्यां वसतिं प्रतिलेखयेत् अर्थाद्यदि प्रातःकाले प्राभाइ कालः अप्रतिक्रम्यो भवेत् तदा सन्ध्यायां पाभाइकालः प्रतिक्रमतीति भावः तथा वसति प्रतिलेखना त्वन्यस्मिन् कालग्रहणे अर्थात्काल-ग्रहणस्य माण्डलां कुर्वन्तीति ? पारियकाउसग्गो वंदित्ताण तओ गुरुं थुइमंगलचउकाउं कालं संपडिलेहणए ? तद्व्याख्या पारियकाउसग्गो प्रतिक्रमणक्रियांते पश्चात्पारितकायोत्सर्गे नमस्कारपूर्वं लोगस्स उज्जोअगरे इत्यनेन पारयित्वा ततोनन्तरं द्वादशावर्त्तवन्दनेन गुरुं वंदित्वा इच्छामो अणुसंट्ठियं इत्युक्त्वा स्थित्वा पश्चात् स्तुतिमङ्गलं च स्तुतित्रयात्मकं वर्द्धमानारक्षस्तुतित्रयपाठरूपं मङ्गलं कृत्वा कालं प्रत्युपेक्षिते

प्रतिजागर्त्ति नन्वसरसत्कं कालं कालग्रहणं साधु गृह्णातीत्यर्थः अथ प्राभातिककाल ज्ञेयः ९ ततोऽनन्तरं यत्करणीयं तदाह पढमं पोरसी
सज्झायं बिइयज्झाणं झियायई तइयाए निद्दमोक्खन्तु सज्झायं तु चउत्थिए १ व्याख्या प्रथमायां पौरुष्यां स्वाध्यायं कुर्यादिति शेषः
द्वितीयायां ध्यानं पिण्डस्थादिकं धर्मध्यानादिकं अधीतसूत्रार्थध्यायेच्चिन्तयेत् तृतीयायां पौरुष्यां निद्राया मोक्षो निद्रामुत्कलत्वा विधेया
चतुर्थ्यां पुनरपि स्वाध्यायं कुर्यात् द्वितीयवारकथनात् शिष्याय गुरुभिरुपदेशो दातव्यः ननु पाठने यथासम्भिन्तनीयइतिज्ञेयं २ पोरसीए
चउत्थिए कालं तु पडिलेहए सज्झायं तु तओ कुज्जा अबोहन्तो असंजए ३ व्याख्या रात्र्याश्चतुर्थ्यां पौरुष्यां पुनः कालं चतुर्वैरात्रिक
कालं विरतिकालं गृह्णाति तत्कालं प्रतिलेख्य प्रत्युपेक्ष्य प्रतिजागर्य भाष्यपूर्वीसा तत स्वाध्यायं कुर्यात् परं किं कुर्वन्स्वाध्यायं कुर्यात्
असंयतीन् गृहस्थान अबोधयन् अजागरयन् शनैः शनैः पठन् इत्यर्थः उच्चैः पठनश्रवणात् गृहस्था सावद्यव्यापारं कुर्वन्ति तथा साधुरपि
आरम्भक्रिया भाक् स्यादिति भावः ३ पोरसीए चउब्भागे वंदित्ताण तओ गुरुं पडिक्कमित्ता कालस्स कालं तु पडिलेहए ४ व्याख्या
रात्र्याश्चतुर्थ्यां पौरुष्याश्चतुर्थभाग अवशेषे सति घटिकाद्वये रजन्या अवशिष्टे सति तदाहि कालसम्भवात् न कालस्य ग्रहणं तस्मात्ततो गुरु
वन्दित्वा इदमावश्यकवन्दनं दत्वा कालस्य इति तत्समयपरोक्ष्य कालं वैरात्रिकं विरतिकालं प्रतिक्रम्य तत्सम्बन्धिनी क्रिया कृत्वा तु पुनः
कालं प्राभातिकं प्राभातिककालमित्यर्थः प्रतिलेखयेत् प्राभातिककालग्रहणं गृह्णीयात् इत्यनेन आवश्यकवेलां ज्ञात्वा आवश्यकानि कुर्यादिति ४
इत्यादि बहुषु जैनसिद्धान्तेषु योगनिधिः साक्षात्प्रदर्शिता तस्य विधिः स्वल्प श्रुत कथं ज्ञायते स विधिस्तु पूर्वोक्तपञ्चाङ्गीव ज्ञायते तथो
त्तराध्ययने एकोनत्रिंशसमाऽध्ययनेऽपि प्रोक्तं कालग्रहणस्य क्रियां कुर्वन् जीवः ज्ञानावरणीयकर्म क्षपयति तथा च तत्पाठः कालपडिले
हणाएणं भंते जीवे किं जणइ कालपडिलेहणाएणं नाणावरणिज्जंकम्मं खवेइ १ व्याख्या हेभदंत कालप्रतिलेखनया कालस्य प्रादोषिक
प्राभातिकादिकस्य आदिशब्दात् अर्द्धरात्रिविरतिकालयोरपि ग्रहणं प्रतिलेखना प्रत्युपेक्षणा सिद्धान्तोक्त विधिना तत्प्रत्यक्षग्रहणप्रतिजागरणा

सावधानत्वं कालप्रतिलेखना तथा जीवः किं जनयति गुरुराह हे शिष्य कालप्रतिलेखनया जीवो ज्ञानावरणीयं कर्म क्षपयति इत्यादि कालग्रहणविधिपूर्वकमेव साधुभिः सूत्रस्य पठनपाठनादिकं कार्यं नान्यथेति सिद्धान्ते प्रोक्तं योगवहनक्रियाया विशेषविधिस्तु सूत्रनिर्युक्ति वृत्तिपरम्परातोऽवसेयः ॥

इति श्रीमत्पंन्यासदयाविमलजित्सुशिष्यपंन्यासश्रीसौभाग्यविमलजिद्विनेयमुक्तिविमलेनविरचितायांस्वोपज्ञाऽऽगमवाचनमीमांसावृत्तौ पञ्चमकाव्यार्थः ॥

स्थानाङ्गे दशमे तथा शिखिमिते स्थाने स मुक्तं यथा
सद्योगं वहतीह साधुमघवा यो वै भवाब्धेस्तटम् ।
प्राप्नोत्येव तथाऽऽगमेसिसहिता भद्रेति सम्पद्यते
तेनावश्यमुदारयोगवहनं कार्यं सुसाधूत्तमैः ॥ ६ ॥

अथ षष्ठकाव्यव्याख्यामाह । अत्र षष्ठे काव्ये योगवहनकुर्वतां साधूनामागमेसिभद्रा भवति तद्दर्शयन्नाह स्थानाङ्गे इति स्थानाङ्गे स्थानाङ्गसूत्रे दशमे स्थाने तथा शिखिमिते स्थाने अग्निममिते स्थाने तृतीयस्थाने इत्यर्थः लौकिकशास्त्रेषु हि गार्हपत्यदक्षिणाग्न्याऽऽव- हनीयसंज्ञकाग्नित्रयपरिकल्पनात् त्रयोऽग्नयः इति समुक्तं गणधरैः प्रोक्तं यथा यत्प्रोक्तं तदेवाह यः साधुमघवा यो व्रतीन्द्रः इह सद्योगं शुद्धक्रियायुक्तयोगं वहति यत्तदोर्नित्याभिसम्बन्ध त्वादत्र तच्छब्दोऽध्याहार्यः सः साधुः वै निश्चयं भवाब्धेः संसारसमुद्रस्य तटं प्रतीरं प्राप्नोत्येवासादयत्येव । अलब्धमध्यं संसारं तरतीत्यर्थः । तथा यः साधुः योगं वहति तस्य आगमे सिसहिता भद्रेति आगमेसि भद्रा

पादिष्टमर्थं न येषां ते आगमिष्यद्भद्रास्तेषामभावात् आगमिष्यद्भद्रता तस्यै आगमिष्यद्भद्रतायै एतदर्थमित्यर्थः आगमिष्यद्भद्रतया या कर्म प्रभवकर्मणां महान्ति महान्ति तथा निदायते लूयते ज्ञानाद्याराधनालता आनन्दरसोपेतमोक्षफला येन परशुनेव देवेन्द्रादिगुणर्द्धि प्रार्थना प्रणिधानेन तन्निदानमविद्यमानं यस्य सोऽनिदानस्तद्भावस्तत्ता तया हेतुभूतया निरुत्सुकतयेत्यर्थः १ दृष्टिसम्पन्नतया सम्यग्दृष्टितया २ योगवाहितया श्रुतोपधानकारितया योगेन वा समाधिना सर्वत्रानुत्सुकत्वलक्षणेन वहतीत्येवं शीलो योगवाही तद्भावस्तत्ता तया ३ क्षान्त्या क्षमते इति क्षान्तिक्षमणः क्षान्तिग्रहणमसमर्थताव्यवच्छेदार्थं यतोऽसमर्थोऽपि क्षमत इति क्षान्तिक्षमणस्य भावस्तत्ता तया ४ जितेन्द्रियतया करणनिग्रहेण ५ अमाइल्लयाए त्ति मायी मायावांस्तत्प्रतिषेधेनाऽमायावांस्तद्भावस्तत्ता तया ६ तथा पार्श्वे बहिर्ज्ञाना-दीनां देशतः सर्वतो वा तिष्ठतीति पार्श्वस्थ उक्तञ्च सो पासत्थो दुविहो देसे सव्वे होइ नायव्वो सव्वम्मि नाणदंसण चरणाणं जो उपासत्थो १ देसंमि य पासत्थो सिज्जायरभिहडनियतपिंडं च नीयं च अग्गपिंडं भुंजइ निकारणे चेवत्ति २ नियतपिण्डो यथा मयैतावद्दातव्यं भवता तु नित्यमेव ग्राह्यमित्येवं नियततया यो गृह्यते नीयमिति नित्यं सदाग्रपिंडोऽपवृत्ते परिवेषणे आदावेव यो गृह्यत इति पार्श्वस्थस्य भावः पार्श्वस्थता तया ७ तथा शोभनः पार्श्वस्थादिदोषवर्जिततया मूलोत्तरगुणसम्पन्नतया च स चासौ श्रमणश्च साधुश्रमणस्तद्भावस्तत्ता तया ८ तथा प्रकृष्टं प्रशस्तं प्रगतं वा वचनमागमः प्रवचनं द्वादशाङ्गं तदाधारो वा सङ्घस्तस्य वत्सलता हितकारिता प्रत्यनीकत्वादिनिरासेनेति प्रवचनवत्सलता तया ९ तथा प्रवचनस्य द्वादशाङ्गस्योद्भावनं प्रभावनं प्रावचनिकत्व धर्मकथा वादादिलब्धिभिर्वर्णवादजननं प्रवचनोद्भावनं तद्धेतु प्रवचनोद्भावना तयेति १० एतानिचागमिष्यद्भद्रता कारणानि प्रोक्तानीति शेषः अत्रापि स्थानाङ्गसूत्रस्थदशमस्थानकसूत्रवृत्तिपाठ रचनात् साधूनां योगोद्वहनतः प्रोक्तं एतादृशानां सूत्रवृत्तिपाठानां समूहमवगण्य ये योगोद्वहनमकृत्वैव सूत्रं वाचयन्ति तथा जैनागमेषु साधूनां योगवहनं न प्रोक्तमिति निजकुमतं कदाग्रहं मादृक्कृत्योत्सूत्रप्ररूपणां कुर्वन्ति ते साधवः कियत् परिमितं संसारं भ्रमिष्यन्ति तत्तु केवल-

श्रावकाणामुपधानवहनं च प्रोन्यते अत्र तीर्थङ्करोक्त सिद्धान्तकलापलुंपकः लुंपाकमतीमाह ननु सूत्रे श्रावकाः सुअपरिग्गहिआ इत्थं नन्दोसूत्रे प्रोक्तमस्तिअतः श्रावकाणां श्रुतपठनं योग्यमस्ति गुरुराह अत्र श्रुतं आवश्यकषट्करूपं ज्ञेयं तदपि उपधानविधिपूर्वकमेव पठति यस्मात् नन्दीसूत्रे सुअपरिग्गहिआ इत्युक्त्वा अनन्तरमेव तवोवहाणाहि एतत्पदं निगदितमतस्तदुपधानतपः पूर्वकमेव पठनीयमिति पुनः शङ्कां कुर्वन् ढुंढकमती प्राह ननु सूत्रेषु श्रावकाणां श्रुतपठनं निषिद्धं तर्हि श्रीआवश्यकसूत्रपठनं कथं ननिषिध्यते इति गुरुराह अत्रार्थे श्रीअनुयोगद्वारसूत्रवचनं चेदं यतः गाथा समणेण सावएण वा अवस्स कायव्वं हवइ जम्हा अतो अहनिसिस्सय तम्हा आवस्सयं नाम १ एतत् गाथा व्याख्यायां यदुक्तं श्रीहेमचन्द्रसूरिभिः तत्पाठो यथा आवस्सय गाहा व्याख्या श्रमणादिभिरवश्यं क्रियते इति निपातनादावश्यकं अथवा ज्ञानादिगुणमोक्षो वा आसमन्ताद्वश्यः क्रियतेऽने नेत्यावश्यकं अथवा आसमन्ताद्वश्या इन्द्रियकषायादिभावशत्रवो येषां ते तथा तैरेव क्रियते तत्तदावश्यकं अथवा समग्रस्यापि गुणग्रामस्यावासकमित्यावश्यकमित्याद्यपरमपि स्वधिया वाच्यं पूर्वमपि च व्युत्पादितमिदं तथा मुमुक्षुभिर्नियमानुष्ठेयत्वादवश्यकरणीयं तथा ध्रुवनिग्रह इति अत्रानादित्वात् क्वचिदप्यपर्यवसितत्वात् ध्रुवकर्म तत्फलभूतः संसारी वा तस्य निग्रहहेतुत्वान्निग्रहो ध्रुवनिग्रहस्तथा कर्ममलिनस्यात्मनो विशुद्धिहेतुत्वाद्विशुद्धिः तथा सामायकादिषट् अध्ययनकलापात्मकत्वादध्ययनषट्वर्गस्तथाभीष्टार्थसिद्धेः सम्यगुपायत्वात् न्यायोथवा जीवकर्म सम्बन्धापनयनान्न्यायः अयमभिप्रायो यथाकासणिकैर्दृष्टो न्यायोद्वयोऽर्थिनो भूमिद्रव्यादिसम्बन्धं चिरकालीनमप्यापनयत्येवं जीवकर्मणोरनादिकालीनमप्याश्रयाश्रयिभावसम्बन्धमपनयतीत्यावश्यकमपि न्याय उच्यते तथा मोक्षाराधनहेतुत्वादाराधना तथा मोक्षपुरप्रापकत्वादेव मार्ग इति गाथार्थः उक्तगाथाया आद्यपदं सूत्रकार एव व्युत्पादयन्नाह श्रमणेण गाहा श्रमणादिना अहोरात्रस्य मध्ये यस्मादवश्य क्रियते तस्मादावश्यकं एवमवश्यकरणीयादिपदानामपि व्युत्पत्तिर्द्रष्टव्या उपलक्षणत्वादस्य इति गाथार्थः । सेतमित्यादि निगमनं तदेतदावश्यकं निक्षिप्तमित्यर्थः तदेवं नामादिभेदैर्निक्षिप्तमावश्यकं

नमिक्षेपे च यदुक्तमावश्यकं निक्षेप्स्यामीति तत्सम्पादितं इति अनुयोगद्वारग्रन्थे आवश्यकाधिकारकथित १ इति श्रीअनुयोगद्वारसूत्रवृत्ति
वचनादावश्यकश्रुतं अवश्यं विधिना वाच्यं पठने कारणे तु षड्जीवनिकायाध्ययनपठनेऽपि न दोषः इति चूर्णिवाक्यं अथवा योनिरुपधा
नश्रुतमधीते स यादृशो भवति तद्विस्यते महानिशीथसूत्रेप्युक्तं तत्पाठः जेणं केइ न इच्छिज्जाए अनियंतणे अविणओवहाणेणं चेव पंचमंगलाइ
सुअनाणं अहिज्जेइ वा अज्झावेइ वा अज्झावयमाणस्स वा अणुमन्निय मावेज्जा सेणं न भविज्जा पियधम्मे भवज्जा दढधम्मे भवेज्जा भत्तिजुत्ते
हीलेज्जा सुत्तं हीलिज्जा अत्थं हीलिज्जा सुतत्थुभए हीलेज्जा भावए गुरुहीलिज्जा गुरुआसायज्जा अतीताणागए वट्टमाणे तित्थयरे आसायज्जा
सुअनाणं आसायज्जा आयअणंतसंसारसागरेमांहिंडमाणस्स तासु तासु असंखुड्डवियडासुकुलसीलसव्वपरिसंठासु जोणीसु परिय इति
इतिश्रीमहानिशीथसूत्रे तृतीयाध्ययने तत्पाठभावार्थो यथा यः कोऽपि प्राणी दैवे नियन्त्रणानियमं न इच्छेज्जा न इच्छेद् तथा योऽविनयेनाऽनु-
पधानेन विनयोपधानतपसा विना नमस्कारप्रभृतिसूत्रमधीते तथाऽन्येषां सूत्रमध्यापयति अध्यापयन्तमन्यं समनुजानीते सः प्राणी प्रियधर्मा
नरूपनीयः दृढधर्मापि न वाच्यः स तथा विनयोपधानं विना नमस्कारप्रभृतिसूत्रपाठकः प्राणी सूत्रं हीलयति अर्थं हीलयति सूत्रार्थोभयरूपं
मार्गं हेलयति यावद्गुरुमपि हेलयति गुरोराशातनां करोति तथा अतीतानागतवर्त्तमानकालाश्रितानां तीर्थंकराणामाशातनां करोति
पुनरनन्तकालं यावत्संसारं परिभ्रमति तासुतासु असंखुड्डविकटासु चतुरशीतिलक्षयोनिषु भ्रमणशीलविशेषैः तथा श्रीउपदेशमालाग्रन्थेऽपि
यदुक्तं विजयलक्ष्मीसूरिपादैः । ॥ श्लोकः ॥ उपधानतपस्तप्त्वा आवश्यकं पठेद्गृही । योगेश्चागमान् साधुरित्याचारप्रदर्शकः ॥ १ ॥
व्याख्या नवरं श्रुताराधना पुरुषेण तु उपधानतपोविधायैवावश्यकं पठनीयं उपधानशब्दस्य का व्युत्पत्तिरिति चेदुच्यते उपसमीपेऽधीयते येन
तपसा तदुपधानमिति व्युत्पत्तेः तत्र साधूनामावश्यकादिश्रुताराधनार्थमागाढाऽनागाढयोगरूपं सिद्धान्ताविरोधित्वस्वसामाचार्यनुसारेण ज्ञेयं
श्रावकाणां तु श्रीमहानिशीथमादिसिद्धान्तोक्तं पञ्चपरमेष्ठिनमस्कारादिसूत्राराधनार्थमुपधानषट्कमनीतमेव साधूनां योगोद्वहनं विनाश्च

सिद्धान्तवाचनादिकं न शुद्ध्यति तथोपधानतपो विना श्राद्धानामपि नमस्कारादिसूत्रभणनगुणनादिकं न शुद्ध्यति यदुक्तं श्रीमहानिशीथसूत्रे अकालाऽवहुमानाऽनुपधानाद्यष्टविधज्ञानकुशीलनानां मध्ये ज्ञानसत्काष्टविधाऽनाचारमध्ये अनुपधानकुशीलस्य महादोषत्वं प्रोक्तं तथा च तत्पाठः अट्ठण्हंपि एआणं गोअमा जे केइ अणुवहाणेणं सुपसत्थं नाणमहीअंति अज्झावयंति वा अहीअं ते वा अज्झावयंते वा समणुजाणंति तेणं महापावकम्मा महतीं सुपसत्थनाणस्सासायणं पकुव्वंति से भयवं जइ एवं ता कि पंचमंगलस्सणं उवहाणं कायव्वं गोअमा पढमं नाणं तओदया दयाएअ सव्वजगज्जीव पाणंभूअ सताणं अत्तसमदरिसित्तं जाव सव्वुत्तमसोक्खंति ता सव्वमेवेअं नाणाउ पवत्तिज्जा जाव गोअमा इमाए विहीए पंचमंगलस्सणं विणओवहाणं कायव्वं तंजहा सुपसत्थे चेव तिहिकरणमुहुत्तनक्खत्तजोगलग्गससीवली विप्पमुक्कजायाइ मया संकेण संजाय सद्धा संवेगसुतिव्वतरमहं तुल्ल संतसुहज्झवसायाणुगयभत्ती वहुमाणपुव्वं णिण्णिआणदुवालसभत्तट्ठिएणं चेइआलए जंतु विरहिओगासे जावनवनवसंवेग समुच्छलंत संजायवहल घणनिरंतरअचिंतपरमसुह परिणामविसेसुल्लासि अजाव दढयरं करणेणं जावपंचमंगल महासुअक्खंधस्स पंचज्झयणेगचूला परिक्खित्तस्स पवरपवयणदेवयाहिट्ठिअस्स तिपदपरिच्छिन्ने गालावगसत्तक्खरपरिमाणं अणंतगमपज्जवत्थ पसाहगं सव्वमहामंतपवरविज्जाणं परमवीअभूअं नमो अरहंताणंति पढममज्झयणमहिज्जेअव्वं तद्दिअहेअ आयंबिलेणं पारेयव्वं तहेव वीअदिणे जावदुपदपरिच्छिन्ने गालावगपंचक्खरपरिमाणं नमो सिद्धाणंति वीअमज्झयणं आयंबिलेणं अहिज्जेअव्वं एवं जावपंचमज्झयणं पंचमदिणे आयंबिलेणं जाव तिआ आलावगतीति सक्खरपरिमाणं एसो पंचनमुक्कारो इत्यादि चूलं छट्ठसत्तट्ठमदिणे आयंबिलेहिं अहिज्जेअव्व जाव-अट्ठमभत्तेणं समणुजाणा विऊणं जाव अवधारेयव्वं इत्यादि १ तओ इरिआवहिअं अहिज्जीएसे भयवं कयराए विहीए गोयमा जहाणं पंचमंगलमहासुयक्खंधं २ एवं सक्कच्छयं एगट्ठमवत्तीसाए आयंबिले हिं ३ अरहंतत्थयं एगेणं चउत्थेणं तिहिं आयंबिलेहिं च ४ चउवीसत्थयं एगेणं छट्ठेणं एगेणं चउत्थेणं पणवीसाए आयंबिलेहिं ५ नाणत्थयं एगेणं चउत्थेणं पंचहिं आयंबिले हिं इत्यादि ६ तउ सोहणे

तन्निक्षेप च यदुक्तमावश्यकं निक्षेप्सामीति तत्सम्यानिर्ते इति अनुयोगद्वारग्रन्थे आवश्यकाधिकारकथित १ इति श्रीअनुयोगद्वारसूत्रवृत्ति-वचनात्तदस्तसमुते भवत्यं विविना वा"यं पठनं कारणे तु षड्जीवनिकायाध्ययनपठनेऽपि न दोषः इति चूर्णिवाक्यं अथवा योनिरुपधा-नमुनमधीते स पापनो भवति तन्निस्यते महानिशीयसूत्रेप्युक्तं तस्मात् जेणं केइनइच्छिज्जाए अनियंतणं अविणओवहाणेणं चेव पंचमंगलाइ सुभनाणं महिज्जइ वा अज्झावेइ वा अज्झावयमाणस्स वा अणुमन्निज्जमाणेज्जा सेणं न भविज्जापियधम्मेण भवेज्जादढधम्मेणं भवेज्जा भत्तिजुत्ते हीलिज्जामुत्तं हीलिज्जा अत्थं हीलिज्जा सुतत्थुभए हीलेज्जा नाणं गुरुहीलिज्जा गुरुआसाएज्जा अतीताणागए वट्टमाणे तित्थयरे आसाएज्जा सुभनाणं आसाएज्जा जाव अणंतसंसारसागरेमाहिंडमाणस्स तासु तासु असंवुडनियडामुजुम्मसील्लस्सपरिसत्तासु जाणीसु पडिय इति इतिश्रीमहानिशीथसूत्र तृतीयाध्ययने तत्पाठभावार्थो यथा य" कोऽपि प्राणी गैयं नियन्त्रणानियमं न इच्छेज्जा न इच्छेत् तथा योऽविनयेनाऽनु-पधानेन विनयोपधानतपा विना नमस्कारप्रभृतिसूत्रमधीते तथाऽन्येषां सूत्रमध्यापयति अध्यापयन्तमन्यं समनुमानीते सः प्राणी प्रियधर्मा नकथनीय' दृढधर्मापि न वाच्य' स तथा विनयोपधानं विना नमस्कारप्रभृतिसूत्रपाठकः प्राणी सूत्रं हीलयति अर्थं हीलयति सूत्रार्थोभयरूपं मागमं हीलयति यावद्गुरुमपि हेलयति गुरोराशातनां करोति तथा अतीतानागतवर्तमानकालोद्भवानां तीर्थंकराणामाशातनां करोति पुनरनन्तकालं यावत्संसारं परिभ्रमति तासुतासु असंवृतविकटासु चतुरशीतिलक्षयानिषु भ्रमणमिति विशेषार्थः तथा श्रीउपदेशमालाग्रन्थेऽपि यदुक्तं निमयमसमस्वीसूरिपादैः । ॥ श्लोकः ॥ उपधानतपसाप्त्वा आवश्यकं पठेत्सुधी । योगैस्तथाऽन्यान् साधुरित्याचारप्रदुकं " ॥ १ ॥ स्पष्टं नवरं श्रुतार्थिना पुरुषेण तु उपधानतपोविधायैवावश्यकं पठनीयं उपधानशब्दस्य का व्युत्पत्तिरिति चेदुच्यते उपसमीपेऽधीयते येन तपसा तदुपधानमिति व्युत्पत्तिः तच्च साधूनामावश्यकादिश्रुताराधनार्थमागाढाऽनागाढयोगरूपं सिद्धान्ताविरोधिस्वस्वसमाचार्यनुसारेण ज्ञेयं श्रावकाणां तु श्रीमहानिशीथसूत्रादिसिद्धान्तोक्तं पञ्चपरमेष्ठिनमस्कारादिसूत्राराधनार्थमुपधानरूपंमतीनमेव साधूनां योगोद्वहनं विमाय्या

सिद्धान्तवाचनादिकं न शुद्ध्यति तथोपधानतपो विना श्राद्धानामपि नमस्कारादिसूत्रभणनगुणनादिकं न शुद्ध्यति यदुक्तं श्रीमहानिशीथसूत्रे अकालाऽवहुमानाऽनुपधानाद्यष्टविधज्ञानकुशीलनानां मध्ये ज्ञानसत्काष्टविधाऽनाचारमध्ये अनुपधानकुशीलस्य महादोषत्वं प्रोक्तं तथा च तत्पाठः अट्ठण्हंपि एआणं गोअमा जे केइ अणुवहाणेणं सुपसत्थं नाणमहीअंति अज्झावयंति वा अहीअं ते वा अज्झावयंते वा समणुजाणंति तेणं महापावकम्मा महती सुपसत्थनाणस्सासायणं पकुव्वंति से भयवं जइ एवं ता कि पंचमंगलस्सणं उवहाणं कायव्वं गोअमा पढमं नाणं तओदया दयाएअ सव्वजगज्जीव पाणंभूअ सताणं अत्तसमदरिसितं जाव सव्वुत्तमसोक्खंति ता सव्वमेवेअं नाणाउ पवत्तिज्जा जाव गोअमा इमाए विहीए पंचमंगलस्सणं विणओवहाणं कायव्वं तंजहा सुपसत्थे चेव तिहिकरणमुहुत्तनक्खत्तजोगलग्गससीबली विप्पमुक्कजायाइ मया संकेण संजाय सद्धा संवेगसुतिव्वतरमहं तुल्ल संतसुहज्झवसायाणुगयभत्ती बहुमाणपुव्वं णिण्णिआणदुवालसभत्तट्ठिएणं चेइआलए जंतु विरहिं-ओगासे जावनवनवसंवेग समुच्छलंत संजायबहल घणनिरंतरअचिंतपरमसुह परिणामविसेसुल्लासि अजाव दढयरं करणेणं जावपंचमंगल महासुअक्खंधस्स पंचज्झयणेगचूला परिक्खित्तस्स पवरपवयणदेवयाहिट्ठिअस्स तिपढपरिच्छिन्ने गालावगसत्तक्खरपरिमाणं अणंतगमपज्जवत्थ पसाहगं सव्वमहामंतपवरविज्जाणं परमवीअभूअं नमो अरहंताणंति पढममज्झयणमहिज्झेअव्वं तद्दिअहेअ आयंबिलेणं पारेयव्वं तहेव बीअदिणे जावदुपदपरिच्छिन्ने गालावगपंचक्खरपरिमाणं नमो सिद्धाणंति बीअमज्झयणं आयंबिलेणं अहिज्जेअव्वं एवं जावपंचमज्झयणं पंचमदिणे आयंबिलेणं जाव तिआ आलावगतीति सक्खरपरिमाणं एसो पंचनमुक्कारो इत्यादि चूलं छट्ठसत्तट्ठमदिणे आयंबिलेहिं अहिज्जेअव्व जाव-अट्ठमभत्तेणं समणुजाणा विऊणं जाव अवधारेयव्वं इत्यादि १ तओ इरिआवहिअं अहिज्जीएसे भयवं कयराए विहीए गोयमा जहाणं पंचमंगलमहासुयक्खंधं २ एवं सक्कच्छयं एगट्ठमवत्तीसाए आयंबिले हिं ३ अरहंतत्थयं एगेणं चउत्थेणं तिहिं आयंबिलेहिं च ४ चउवीस-त्थयं एगेणं छट्ठेणं एगेणं चउत्थेणं पणवीसाए आयंबिलेहिं ५ नाणत्थयं एगेणं चउत्थेणं पंचहिं आयंबिले हिं इत्यादि ६ तउ सोहणे

निरिक्करणमुटुत्तनस्खत्तनागम्मासससीमसे जहासत्तीए जगगुरूणं सपाइ अपूओवयारेण पडिलाभिअसाहुवग्गेणय जावगुरुणासद्धिं साहुसा- हुणिसाहम्मिअ असेसबंधुवग्गपरिअरिअरियणं चेव पढमं चेइए वंदिअब्बेतयणंतरं च गुणड्ढे साहुणो अ तहा साहम्मिअ जणस्सणं जहा

सत्तीए पणामाइजाएणं सुहुमहग्घयमउअ चोक्खवत्थप्पयाणाइणा वा महासम्माणा कायव्वो जावगुरूणा धम्मदेसण। कायव्वं तओ परमस- द्धासंवेगपर आजम्माभिग्गहं च दायव्वं जावतए अज्जप्पभिई जावज्जीवं तिकालिअं चेइए वंदिअव्वे जावममिमंतिआओ सत्तगंधसुद्धीओ वसुत्तमेग नित्थारगा भविज्जा सिग्घं उभारे माणेणं पिय्यवाउ जाव घउव्विहेणंपि समणसंघेणं जावगेयसुद्धीओ चित्तणओ नभा जगगुरूण जिणिंदाणं पुरक्खेसाओ गंधं डमिसाणसि अमक्खरामंगहाय सहत्थेणामयस्स्सेधे सुमारा वयमाणेअ गुरुणा एवं भणिअव्व अन्नतस्तस्योपबृंहणादि से भयवं किं जहा पंचमंगलं तहा सामाइआइअसेसंपि सुअनाणमहिज्जणेअव्वं गोयमा तहा चेव विणआ बहुमाणेणमडीएयव्वं नवर- महिज्जणिउ कामेहिं अट्ठविहं चेव नाणायारं सव्वपयत्तेणं कामाइरस्सितज्जा अण्णहा महया सायणति अण्णंच दुवालसंगस्स सुअनाणस्स पढमचरिमजामं महनिसमज्झयणासमावण च पंचमंगलस्स सालसद्धजामिअे अन्नं च पंचमगलं कयसामाइए वा अकयसामाइए वा अहीए सामाइअमाइअं सु सुअ चयारंभपरिग्गहे जावज्जीवं कयसामाइए अहिज्जेइअ तणे सारभपरिग्गाहे अकयसामाइए महापंचमगलस्स आलावगे आलावगे आयंबिलं तहा सक्कत्थयाइसु वि दुवालसंगस्स पुण सुअनाणस्स उद्देसगज्झयणेसु से भयवं सुदुक्करं पंचमंगलमहासुअक्खंधस्स विणओवहाणं पन्नत्तं महइ अपसा निअंतणा कहं बालेहिं किज्जइ गोयमा जेणं केइ नइच्छिज्जा एयं निअंतणं अविणओवहाणेणं चेव पंचमंगलाइ सुअनाणमहिज्जेइ वा अज्झावेइ वा अज्झावयमाणस्स वा अणुन्नं पयाइ सेणं न भविज्जा पि अथम्मे जावगुरुं सेणं आसाइज्जा अइभाणागय वट्टमाणे तित्थयरे आसाइज्जा सुअनाणं आसाइज्जा आवअणंतसंसारसागरमाहिंडमाणस्स मावसुचिरं निअंतणा जो पुण एअं विहिं फासिज्जा नाओ पयपयि अइअरिज्जा अट्ठविरागेणं चव पंचमंगलप्पमिइ सुअनाणस्स विणओवहाणं करिज्जा सेणं गोयमा नो

हीलिज्जा सूत्रं जाव न लभिज्जा पुणो पुणो भवचारगे गब्भवासाइअं अणेगहा जंतणंति णवरं गोअमा जेणं वाले जाव अविन्नाय पुण्णापावाणं विसेसे तावणं से पंचमंगलस्सणं गोयमाएगं तेणं अओगेण तस्स पंचमंगलमहासुअरकंधस्स एगमविआलावगं दायव्वं जओ अणाइभवंतरसमज्जिआऽसुहकम्मरासिदहणट्ठमिणं लभित्ताणं न वाले सम्ममाराहिज्जा लहुत्तं व आणेइता तस्स केवलं धम्मकहाए गोयमा भत्तीसमुप्पाइज्जइ तओ नाऊणंपि अधम्मं दढधम्मं भत्तिजुत्तं ताहे चेव जावइअं पच्चक्खाणं निव्वाहेउं समत्थो भवइ तावइअंकाराविज्जइ राइभोअणं च दुविहं तिविहेण चउविहेण वा जहा सत्तीए पच्चक्खा विज्जइ गोअमा पणयालाए नमुक्कारसहिआणं चउत्थं चोवीसाए पोरसीहिं वारसहिं पुरिमड्ढेहिं दसहिं अवड्ढेहिं तिहिं निव्विइएहिं चउहिं एगट्ठाणगेहिं दोहिं आयंविलेहिं एगेणं सुद्धत्थायंविलेणं अव्वावारत्ताए रोद्दज्झाण विगहा विरहिअस्स सज्झाएगग्गचित्तस्स एगमेवायंविलं मासखमणं विसेसिज्जातओ अजावइअं तवोवहाणगं वीसमंतो करिज्जा तावइयं अणुगणे ऊणं जाहे जाणिज्जा जहाणं इत्ति अमित्तेणं तवोवहाणेणं पंचमंगलस्स जोगीभूओ ताहे आउत्तो पढिज्जा न-अण्णाहत्ति से भयवं पभूअं कालाइक्कमं एअं जइ करिज्जइ अवंतराले पंचतमुवगच्छे तओ नमुक्कारविरहिए कहमुत्तिपई साहिज्जा गोअमा जं समयं चेव सुत्तोवयार निमित्तेणं असढभावत्ताए जहासत्तीए किंचितवमारभिज्जा तं समयमेव तदहीअसुत्तो भयंदट्ठव्वं जओणं सोतं पंचनमुक्कारं सुत्तत्थोभयं न अविहीए गिण्हे किं तु तहा गिण्हे जहा भवं रेसु पिण विप्पणस्सए अज्झवयसायत्ताए आराहगो भविज्जासे भयवं जेण उण अन्नेसिमहीयमाणाणं सुआवरणखओवसमेण कन्नहाडित्तणेणं पंचमंगलमऽहीअं भविज्जा सेविअ किं तवोवहाणं करिज्जा गोयमा करिज्जा से भयवं केणं अट्ठेणंगोयमा सुलभवोहिलाभ निमित्तेणं एवं चेइआइं अकुव्वमाणे नाणकुसीलेणेएइति एतत्पाठस्य संस्कृतछाया यथा अष्टानामऽपि एतेषां हे गौतम ये केचित् अनुपधानेन सुप्रशस्तं ज्ञानमधीयते अध्यापयन्ति वा अधीयानान् वा अध्यापयतः वा समनुजानन्ति ते महापापकर्माणः महतीं सुप्रशस्तज्ञानस्याऽऽशातनां प्रकुर्वन्ति तस्य हे भगवन् यदि एवं तदा किं पञ्चमङ्गलस्य उपधानं कारयितव्यं हे गौतम प्रथमं

मार्गे निस्तारकः भूयाः इति उच्चारमाणेन क्षेप्तव्याः यावच्चतुर्विधेनापि श्रमणसङ्घेन यावद्गन्धमुष्टयः क्षेपयितव्याः ततः जगद्गुरुणां जिनेन्द्राणां पूजैकदेशात् गन्धाढ्याऽऽम्लानसितमाल्यदामगृहीत्वा स्वहस्तेनोभयस्कन्धयोराऽऽरोपयमानेन गुरुणा एवं भणितव्यं तस्य हे भगवन् किं यथा पञ्चमङ्गलं तथा सामायिकादिकमऽशेषमपि श्रुतज्ञानमध्यापितव्यं हे गौतम तथा एव विनयोपधानेनाऽध्येतव्यं नवरमऽध्येतुकामैः अष्टविधः एव ज्ञानाचारः सर्वप्रयत्नेन कालादिः रक्ष्येत अन्यथा महत्याशातनेति अन्यच्च द्वादशाङ्गस्य श्रुतज्ञानस्य प्रथमचरमयामं अहर्निशमध्ययनाऽध्यापने च पञ्चमङ्गलस्य षोडशाऽर्द्धयामिकं अन्यच्च पञ्चमंगलं कृतसामायिकेन वा अकृतसामायिकेन वा अधीयते सामायिकादिकंतु श्रुतं त्यक्त्वारम्भपरिग्रहैः यावज्जीवं कृतसामायिकैः अधीयेत न पुनः सारम्भपरिग्रहैः अकृतसामायिकैः महापञ्चमङ्गलस्य आलापके आलापके आचाम्लं तथा शक्रस्तवादिषु अपि द्वादशाङ्गस्य पुनः श्रुतज्ञानस्य उद्देशकाऽध्ययनेषु तस्य हे भगवन् सुदुष्करं पञ्चमङ्गलमहाश्रुतस्कन्धस्य विनयोपधानं प्रज्ञप्तं महती च एषा नियन्त्रणा कथं बालैः क्रियेत हे गौतम यः कश्चित् न इच्छेत् एतां नियन्त्रणां अविनयोपधानेन एव पञ्चमङ्गलादि श्रुतज्ञानमधीयते वा अध्यापयन्ते वा अध्यापयमानस्य वा अन्योन्यं पापयति सः न भवति प्रियधर्मा यावद्गुरून् सः आशातयेत् अतीतानागतवर्त्तमानान् तीर्थंकरान् आशातयेत् श्रुतज्ञानं आशातयेत् यावदनन्तसंसारसागरमाहिण्डमानस्य यावत् सुचिरं निय-न्त्रणा यः पुनः एतं विधिं स्पृशेत् नो मनागऽपि अतिचरेत् यथोक्त विधानेन एव पञ्चमङ्गलप्रभृतिश्रुतज्ञानस्य विनयोपधानं कुर्यात् सः हे गौतम नो हिलयेत् सूत्रं यावन्न लभेत् पुनः पुनः भवचारकं गर्भवासादिकं अनेकधा यन्त्रणामिति नवरं हे गौतम ये बालाः यावदविज्ञाः च पुण्यपापानां विशेषात् तावत् ते पञ्चमङ्गलस्य हे गौतम एकान्तेन अयोग्याः न तेभ्यः पञ्चमङ्गलमहाश्रुतस्कन्धस्य एकमपि आलापकं दातव्यं यतः अनादिभवान्तरसमर्जिता अशुभकर्मराशिदहनार्थमिदं लब्ध्वा न बालाः सम्यगाऽऽराधयेयुः लघुत्वं च आनयन्ति तस्मात्तेभ्यः केवलं धर्मकथाभिः हे गौतम भक्तिः समुपार्जयित्वा ततः ज्ञात्वा प्रियधर्मं दृढधर्मं भक्तियुक्तं तदा

एव यावदिदं मत्यास्थाने निर्वाहयितुं समर्थः भवति तावदिदं कारयेत् रात्रिभोजनं च द्विविधं त्रिविधेन चतुर्विधेन वा यथाशक्त्या मत्यास्थापयेत् हे गौतम पञ्चचत्वारिंशता नमस्कारसहितानां चतुर्थं चतुर्विंशत्या पौरुषीभिः द्वादशभिः पुरिमार्द्धैः दशभिः अपार्द्धैः त्रिभिः निर्विकृतिभिः चतुर्भिः एकस्थानकैः द्वाभ्यां आचाम्लाभ्यां एकेन शुद्धाचार्याचाम्लेन अव्यापारत्वेन रौद्रध्यानविकथा विरहितस्य स्वाध्यायैकाग्रचित्तस्य एकमेवाचाम्लं मासक्षमणं विशेषयेत् ततः च यावदिदं तपोपधानकं विश्रामयन् कुर्यात् तावदिदं अनुगणयित्वा यदा ज्ञायेत यथा एतावन्मात्रेण तपोपधानेन पञ्चमङ्गलस्य योग्योभूतः तदा आयुक्तः पाठयेत् न अन्यथेति तस्य हे भगवन् प्रभूतं कालातिक्रमं एवं यदि क्षिप्ते आपान्तराले पञ्चत्वमुपगच्छेत् ततः नमस्कारविरहितः कथं मुक्तिपथं साधयेत् हे गौतम यं समयं एव सूत्रोपचारनिमित्तेन अशठ-भावत्वेन यथाशक्त्या किञ्चिदपि आरभेत तं समयमेव तदर्थीव सूत्रोभयं द्रष्टव्यं यतः सः तं पञ्चनमस्कारसूत्रार्थोभयं न अविधिना गृह्णीयात् किन्तु तथा गृह्णीयात् यथा भवान्तरेष्वपि न विप्रणश्येत् अध्यवसायत्वेन आराधकः भवेत् तस्य हे भगवन् येन पुनः अन्येषामधीयमाना नाना श्रुतावरणक्षयोपशमेन कर्णघाटीत्वेन पञ्चमङ्गलमधीतं भवेत्तस्यापि च किं तपोपधानं कारयेत् हे गौतम कारयेत् तस्य हे भगवन् केन अर्थेन हे गौतम सुलभबोधिलाभनिमित्तेन एवं चैतानि अकुर्वाणाः ज्ञानकुशीलाः ज्ञेयाः इति ननु श्रीमदावश्यके नमस्कारस्य सामायिकाङ्गतया भणितस्य महानिशीथे महाश्रुतस्कन्धत्वं भण्यमानं कथं युक्तम्, उच्यते यथावश्यकप्रथमाध्ययननिर्युक्तौ पृथगधिकृतं सामायिकं पृथगध्ययनमुच्यते तदेव चतुर्थेऽध्ययने प्रतिक्रमणाख्ये प्रतिक्रमणसूत्रैकदेशतया दृश्यते इयाणिं सुत्ताणुगमो नाम इमं च तं सुत्तं करेमिभंते इत्यादि तत्रावायौ यथा इदानीं सूत्रानुगमः यावदिदं च तत्सूत्रं करोमि भदन्त तच्चूर्णिवचनात्, एवं नमस्कारोऽपि यदा सामायिकादौ भण्यते तदा सामायिकाङ्गं यदा तु श्रवणाश्रवणनिर्जराकार्यादौ पृथग् स्मर्यते तदान्य श्रुतस्कन्धः महानिशीथस्य चान्यश्रुतेभ्यो विशिष्टतर-श्रुतत्वं दृश्यते तद्योगस्य संलग्ने पञ्चचत्वारिंशदाचामाम्ल कपाटबद्धागाढस्यान्ययोगेभ्यो दुस्तपतपोरूपत्वेनोत्कृष्टत्वात् तथा चोक्तं सिद्धान्ता-

गमस्तवेऽपि श्रीजिनप्रभसूरिभिस्तथा च तत्पाठः ।अंचामिपंचघ्ननवप्रमाणमाचाम्लसाध्यं कुमतैरबाध्यम् । महानिशीथं महिमौषधीनां निशीथिनीशं शिववीथिभूतम् ॥ १ ॥ तदवचूर्णिर्यथा पंचघ्ननवतिः पंचचत्वारिंशत् तत्प्रमाणैराचाम्लैः साध्यं कुमतैरबाध्यं महिमानः औषध्यस्तासां निशीथिनीशं चन्द्रम् वृद्धिप्रापकत्वात् मोक्षमार्गभूतं महानिशीथमंचामि पूजयामि इति श्रीसिद्धान्तागमस्तवावचूर्णौ, एवं सत्यपि ये महानिशीथस्य प्रामाण्यं न मन्यन्ते, न विद्मस्तेषां का गतिः श्रुतापलापस्य महापापहेतुत्वात् न च तस्य श्रुतत्वमेव सन्दिग्धमिति मुग्धबुद्धिभिरभिधेयं "नन्दिसूत्रपाक्षिकसूत्रादौ निसीहं महानिसीहमिति" साक्षात्तस्योक्तत्वात् । न चेदं तन्न भवतीत्यपि वाच्यं तथा सति श्रीआचाराङ्गौपपातिकादिग्रन्थानामप्यधुना वर्त्तमानानां नन्दिसूत्राद्युक्तेभ्योऽन्यत्वप्रसङ्गो दुर्वारः एवं चाऽसमीक्ष्य भाषणेनाशातनाकारिणां जिनादिष्वपि यत्तद्वचनीयतायां न कश्चिदविषयः किञ्च येऽप्यनन्तसंसारदुःसहदुःखेभ्योऽप्यभीरुतया कदाग्रहान् महासाहसिकतामवष्टभ्य महानिशीथं न प्रमाणी कुर्वन्ति, तैरप्युपधानतपः प्रतिपत्तव्यं, अन्येष्वपि जैनसिद्धान्तेषु प्रोक्तत्वात् "व्यवहारवृत्तावपि यथा श्रुतग्रहणमभीप्सता" उपधानं कार्यमिति यैश्च श्राद्धानामुपधानविधिर्नमन्यते. तैः साधूनां योगविधिः किमितिमन्यते, श्राद्धवत्साधूनामपि सूत्रपाठादिशुद्ध्यापत्तेः ततः कदाग्रहग्रस्ततां परिहृत्य सिद्धान्तमार्गानुयायितां चानुसृत्य यथोक्त–श्रुतस्कन्धाध्ययनादिपरिभाषोपेतनमस्कारादिसूत्राराधनाहेतुभूतान्युपधानानि जिनवचनप्रामाण्यात् प्रमाणतया प्रतिपत्तव्यानि महानिशीथे चोपधान तपो विना नमस्कारादिसूत्रपठनादिनिषिद्धं सम्प्रति तु द्रव्यक्षेत्रकालाद्यपेक्षया लाभालाभं विभाव्या चरणयोपधानतपो विनापि सूत्रपाठादिकार्यमाणं दृश्यते, आचरणायाश्च लक्षणमिदं कल्पभाष्ये. असढेण समाइण्णं जंकत्थय केणई असावज्जं न निवारिअमन्नेहिं बहुमणुमयमेअमायरिअं ॥१॥ तद्भावार्थो यथा अशठेन समाचीर्णं यत् कुत्र च केनापि असावद्यम् न निवारितमऽन्यैः बहुमऽनुमतमेतत् आचरितमिति तथा आचरणा च जिनाज्ञा समानैव यद्भाषितं भाष्यादौ । असढाइण्णाऽणवज्जं गीअत्थअवारिअंतिमज्झत्था आयरणा विहु आणत्ति वयणउ सुबहुमन्नंति ॥१॥ तद्भावार्थो यथा अशठा चीर्णाऽनवद्यं गीतार्थाऽ-

चारित्रमिति मध्यस्थाः आचरणा अपि निश्चये मानेति वचनतः प्रमाणमन्यन्ते, इति परं येन प्राग् नमस्कारादिसूत्राण्यधीतानि तेनापि यथायोगं निर्विलम्बमेवोपधानानि यथाशक्ति तपसा पौषधग्रहणादिविधिनाऽवश्यं वहनीयानि महानिशीथेऽपि मुख्यपदे आचाम्लोपवास रूपं द्वितीयपदे च यथाशक्त्यपि तपः प्रोक्तं तेन शक्तितस्त्यागतपसी इत्युक्तेश्च तपसि न कश्चिदाग्रहः, पौषधग्रहणक्रिया तु यद्यपि महानिशीथे साक्षान्नोक्ता तथापि यथा साधोर्योगेष्वविधायिक्रियावत्त्वं सर्वमतीतं तथा श्राद्धानामप्युपधानेषु विलोक्यते तत्र निरारम्भत्वादि गुणैरेव ते च सम्यग् पौषधस्वीकारे एव स्युर्नान्यथा यदुक्तं प्राक्तनप्रकरणेषु चिरन्तनाचार्यप्रणीतसम्प्रदायायातस्वस्वगच्छसमाचार्यादिषु चोपधाने पौषधस्वीकारः साक्षादप्युक्तः योगविधिरपि स्पष्टतया सामाचार्यादिष्वेव दृश्यते, न तु क्वापि सिद्धान्ते साक्षात्ततः श्राद्धानामुपधानेषु पौषधग्रहणादिविधियोगविधिवत्प्रमाणयितव्यः तदेवं साधुभिः श्राद्धैश्चोपधानतपोऽवश्यं कृत्यतया समस्तान्यतपोभ्यः प्रथममेव सम्यगाराध्यं निर्वाहार्थं बहुधनव्ययादि वैयग्र्येण प्रमादादिना वा ये तपधानं नोद्वहन्ते, तेषां नमस्कारगुणनदेववन्दनैर्यापथिकी प्रतिक्रमणादि जन्ममध्ये कदापि न शुद्धयतीति भवान्तरे तेषां तत्प्राप्तिरपि दुस्सम्भवो ज्ञानविराधकानां ज्ञानदुष्प्रापतायाः भवितव्यत्वात् तेन ज्ञानाराधनार्थिभिरुपधान विधौ सर्वज्ञत्वात् पठनीयमित्यादि सिद्धान्तवचनेनावश्यमुपधानमतं विधायावश्यकं पठनीयं तथैव साधुभिरपि योगोद्वाहे कृत्वैव सूत्रसमूह वाचनीयमिति विशेषार्थः ॥

इति श्रीमत्तपन्यास दयाविमलगणि सुशिष्य पंन्यास श्रीसौभाग्यविमलजिद्विनेयमुक्तिविमलेन विरचितायां स्वोपज्ञाऽऽगमवाचनमीमांसावृत्तौ सप्तमकाव्यार्थः ॥

पद्मोक्तान्युपधान कानिचवराणीर्यापथिक्यादिनां
तैराबध्यकमुत्तमं विमलतामेति भुवं गेहिनाम् ।

शुद्धान्तेऽपि मुमुक्षुसेवनपरा दीक्षां समादाय च
गुर्वाज्ञा सहिताः पठन्त्य कलुषाः सामायिकादिश्रुतम् ॥ ८ ॥

अथ श्रीअष्टमकाव्याख्यामाह । अत्राष्टमे काव्ये उपधाननामानि तथोपधानेनैवावश्यकं शुद्धयतीति दर्शयन्नाह षट् प्रोक्तानीति वराणि प्रवराणि उपधानानि इर्यापथिक्यादीनां इर्यापथिकी प्रभृतीनामत्रोपलक्षणात् प्रथमं नमस्कारसत्कोपधानं ग्राह्यं प्रथमवाचि आदिशद्वः नान्तोऽपीति श्रूयते, यथा आदिर्नान्तोऽपि चस्मृतः इति वचनात् आदिशद्वेन शेषाणि चत्वार्यपि ग्राह्याणि अर्थात् षडुपधानानि जैनसिद्धान्तेषु प्रसिद्धानि तन्नामानि यथा पंचमंगलमहासुअखंध इति प्रथमोपधानं, तथा पडिकमणासुअखंध इति द्वितीयोपधानं, तथा शक्रस्तवाध्ययन इति तृतीयोपधानं, तथा चैत्यस्तवाध्ययन इति चतुर्थोपधानं, तथा नामस्तवाध्ययन इति पंचमोपधानं, तथा श्रुतस्तवसिद्धस्तवाध्ययन इति षष्ठोपधानमित्येवमनुक्रमेण षडुपधानानि ज्ञेयानि तैः पूर्वोक्तोपधानैरेव ध्रुवं निश्चयं गेहिनां गृहस्थानामावश्यकं विमलतामेति विशुद्धितां प्राप्नोति, उपधानव्रतेनाऽऽवश्यकं शुद्धयतीत्यर्थः तेऽपीति उपधानव्रतयुक्तावश्यकश्रुतपाठकाः श्राद्धास्तेऽपि पुनस्ते कीदृशाः मुमुक्षुसेवनपराः मुमुक्षवः साधवः पञ्चमहाव्रतधारिणस्तेषां सेवनं पूजनं तस्मिन् पराः परायणास्तत्परा इति यावच्चकारः पुनरर्थे ते श्राद्धाः शुद्धां निर्मलां दीक्षां समादाय प्रव्रज्यां समादाय गुर्वाज्ञासहिताः गुरोराज्ञामयुक्ता अकलुषा न विद्यते, कलुषं पापं येषां तेऽकलुषाः निरतिचारचारित्रपालका इत्यर्थस्ते समायिकादिश्रुतं पठन्ति, समायिकमध्ययनविशेषः आदिशब्दात्दृष्टिवादपर्यन्तं श्रुतं पठन्ति, इति काव्यशब्दार्थः।

अथ विशेषार्थः । गृहस्था उपधानव्रतं विधायावश्यकश्रुतं पठन्ति, नान्यथा तेषामावश्यकं शुद्धयति, ते श्रावका अपि यदा दीक्षां गृह्णन्ति, तदा समायिकाध्ययनादारभ्य दृष्टिवादपर्यन्तं श्रुतं नान्यथेति तथोपधानव्रतस्य विस्तारविधिस्तु "श्रीमहानिशीथसूत्रतोऽवसेयः" परमाधुनिककालोद्भवाः केचन साधवोनिजं पण्डितमन्याः वृद्धगुर्वादिपार्श्वे उपधानव्रतस्य शुद्धक्रियायाः धारणामकृत्वैव श्रावकाणामुपधानव्रतं

कारयन्ति, ते अशुद्धक्रिया कर्तारः श्रावका अपि प्रत्युतदोषपात्रं भवन्ति, तस्कारणाच्छुद्धगुरुपरम्परागतारो ये शुद्धक्रिया धारास्तेषां समीपे योगवहनक्रिया वा उपधानव्रतस्य क्रिया प्राणिभिः कर्त्तव्या, परं ये गुरुकुलवासेऽस्थिता अपि नास्ति तादृशानां नूतननूतन साधूनां पार्श्वे यादृक्षः क्रिया न कार्या प्रत्युतदोषहेतुत्वादित्यस्माकं हितोपदेशः, तथोपधानव्रतकारयिता साधुरपि महानिशीथसूत्रयोगोद्वहनवाहिता एव नत्वन्य इति विहितमहानिशीथसूत्रयोगेन साधुना कारिता श्रीउपधानव्रतसंपूर्णा श्रावकाणां क्रिया सफला भवति, तथा ये केचिदाधु-निककाले साधवः गुरुभागरहिताः महानिशीथसूत्रयोगोद्वहनमन्तरेण श्रावकाणामुपधानव्रतं कारयन्ति, तेऽपि जिनाज्ञा विराधका महानिशीथसूत्रविराधकाश्च विज्ञेया इति, तथा श्रीउत्तराध्ययनसूत्रे चतुस्त्रिंशत्तमेऽध्ययनेऽपि साधुश्रावकाणां योगोपधानवहनं प्रोक्तं—गाथा । नियावित्ती अचवले अमाई अकुऊहले विणीयविणए दंते जोगवं उवहाणवं ॥१॥ पियधम्मे दढधम्मे वज्जभीरुहिए सए एयजोगसमाउत्तो तेउलेसं तु परिणमे ॥२॥ गाथा द्वयस्यास्याः—यथा एतद्योगसमायुक्तः प्राणी तेजोलेश्यां परिणमेत् कीदृशः प्राणी नीचैर्वृत्तिः कायवाग्मनोभिरनुत्सेकः नम्रतायुक्त इत्यर्थः पुनर्यः प्राणी अचपलो भवति, पुनरमायी मायारहितः पुनर्यो विनीतविनयः कृतगुर्वादियोग्यव्यवहारः, पुनर्यो दान्तः इन्द्रियदमनपरायण, पुनर्योगवान् सिद्धान्तपाठव्यापारवान्, पुनर्य उपधानवहन निरतः १ पुनर्यः प्रियधर्मा पुनर्यो दृढधर्मा पुनर्योऽवद्यभीरुः पापभीरुको भवति, पुनर्यो हितैषकः सर्वजीवेषु हितान्वेषी अथवा हितं मोक्षमिच्छतीति हितैषिकः एतादृशस्तेजोलेश्यावान् भवति २ अथ पद्मलेश्या लक्षणमाह । गाथा । पयणुक्कोहमाणे य माया लोभे य पयणुए पसंतचित्ते दंतप्पा जोगवं उवहाणवं १ तद्व्याख्याः—एतद्योगसमायुक्तः प्राणी पद्मलेश्यां तु परिणमेत् कीदृशः प्रकर्षेण तनु सूक्ष्मौ क्रोधमानौ यस्य स प्रतनुक्रोधमानः पुनर्यस्य मायालोभौ च प्रतनुकौ भवतः, पुनर्यः प्रशान्तचित्तो भवति पुनर्यो दान्तात्मा पुनर्यो योगवान् तथा उपधानवान् भवति, इत्यादि योगैः समायुक्तः प्राणी पद्मलेश्यावान् भवतीत्यर्थः १ इति "श्रीउत्तराध्ययनसूत्रे तथा समवायाङ्गसूत्रे द्वात्रिंशत्तमसमवायेऽपि स्पष्टं लिखितमस्ति" तथा च तत्पाठः "अणसिस्स-

हाणेअ कहिओ" इत्यादि अत्र केचिल्लुम्पाकाः प्रलपन्ति, यदुयोगवहनमित्यत्र तु योगाः मनोवाक्कायसम्बन्धिनस्तेऽत्रज्ञेया अत्रोत्तरं भो ? अज्ञानिलुम्पक! यदि योगशब्दमूलार्थोत्थापनं क्रियते, तर्हि वहनशब्दस्य कोऽर्थः भविष्यति, द्वयोः शब्दयोः समानाधिकरणेनार्थकरणमेवार्ह-त्वमिति तथा पुनरत्र केचिदविन्दितसिद्धान्तपरमार्थाः समर्थयन्ति, श्रावकाणां दशवैकालिकादिः सिद्धान्तः पठनीयः एवेति यतः समवायाङ्गसूत्रे श्रावकवर्णके। "उवासगदसासुणं उवासगाणं णगराइं उज्जाणाइं चेइयाइं यावज्झोगपरिवाया परियागामु अपरिग्गहा तवोवहाणाइं अन्नसुअ परिग्गहा"। इति शब्देन सिद्धान्ताध्ययनस्य विहितत्वादिति अस्योत्तरं यथा अहो द्रष्टव्यं खलु खलस्य तव कैतवकलाविलसितं. यदत्रेव "चेइयाइ तवोवहाणा" इति पदद्वयेन साक्षादुक्तान्यपि प्रतिमोपधानान्यवगणय्य "सुअपरिग्गहा" इति पदप्रदर्शनं परमिदमपि तवतात्पर्या-नवबोधसूचकमेव यतोऽत्र श्रुतशब्देन श्रुतार्थस्य गृहीतत्वात् यदुक्तमर्थस्यापि श्रुतत्वं स्थानाङ्गसूत्रे द्वितीयस्थानके। दुविहे धम्मे पन्नत्ते तं जहा सुअधम्मे चेव चरित्तधम्मे चेव सुअधम्मे दुविहेपन्नत्ते तं जहा सुत्तसुअधम्मे चेव अत्थसुयधम्मे चेव। इति एतत्पाठवृत्तिदेशो यथोक्तं—"ज्ञानं चारित्रं प्रस्तावयति दुविहेत्यादि दुर्गतौ प्रपततो जीवान् सुगतौ च तान्धारयतीति" धर्मः श्रुतंद्वादशाङ्गं तदेव धर्मः श्रुतधर्मश्चर्यते आसेव्यते तत्तेन वा चर्यते गम्यते मोक्ष इति चारित्रं मूलोत्तरगुणकलापस्तदेव धर्मश्चारित्रधर्म इति सुयधम्मेत्यादि सूत्र्यन्ते सूच्यन्ते वाऽर्था अनेनेति सूत्रं सुस्थितत्वेन व्यापित्वेन च सुष्ठुक्तत्त्वाद्वा सूक्तं सुप्तमिव वा सुप्तमव्याख्यानेनाप्रबुद्धावस्थत्वादिति भाष्यवचनं त्वेवं सिचइ खेरइ जमत्थं तम्हा। सूतं निरुत्तविहिणावा सूएइ सवइ सुवइ सिवइसरएव जो अत्थं ॥ १ ॥ अविवरियं सुतंपिवसुत्थियवावित्तउसुत्तुत्तंति ॥ २ ॥ अर्यतेऽधिगम्यते अर्थ्यते वा याच्यते बुभुत्सुभिरित्यर्थो व्याख्यानमिति आहच। जो सुत्ताभिप्पाओ सोअत्थो अज्जए य जम्हति इति स्थानाङ्गसूत्रवृत्तिवचनात्, अर्थस्यापि श्रुतत्वं परं न च वाच्यं सूत्रमर्थमुभयमपि गृह्यतामिति राजप्रश्नीयसूत्रे "लद्धट्ठे गहियट्ठे पुच्छियट्ठे अहिगयट्ठे विणिछियट्ठे" इति अर्थश्रवणतः अर्थावधारसंशये सति सम्यगुत्तरश्रवणतो विमलावबोधात् ऐदंपर्युपलम्भादित्यादिनाऽर्थग्रहणस्यैवोक्तत्वादत्र सूत्रस्य निशीथसूत्राद्युक्तस्पष्टनिषेधश्च प्रागुक्त एवेति इत्यादि सिद्धान्तपाठ-

दर्शनेनाप्यविदितसिद्धान्तपरमार्थं लुम्पकमती माह न तु तावदुत्सर्गमार्गतो गृहस्थानां सिद्धान्ताध्यापनं न कल्पते किं वा अपवादमार्गतः सिद्धान्ताध्यापनं न कल्पते इति अस्योत्तरं अत्र उत्सर्गमार्गतस्तावत्गृहस्थानां सिद्धान्ताध्यापनं न कल्पते अपवादमार्गतस्तु दीक्षाभिमुखापेक्षस्य षड्जीवनिकायाध्ययनं यावत्सूत्रार्थाभ्यां पिण्डैषणाध्ययनं यावदर्थतश्च पाठयितुं कल्पते इत्यभिप्राय' प्रोच्यते "पढंतु साहूणो एवं असज्झायं विवज्जिउं" ११ ६ इत्यादि व्याख्या पठन्तु व्यक्तवाचामुत्रतोऽर्थतश्च कण्ठगतं कुर्वन्तु साधवो मोक्षसाधनतत्परा मुनय उपलक्षणत्वात्साध्व्योऽपि ननु यदुक्तं—साध्वी साधव एव पठन्ति किं श्राद्धादयो न सिद्धान्तं पठन्ति उच्यते न पठन्त्येव, यदुक्तं—श्रीनिशीथसूत्रस्यैकोनविंशतितमोद्देशके "जे भिक्खू वा भिक्खूणी वा अण्णउत्थियं वा गारत्थियं वा वाएति वा वाएंतं वा साइज्जति" अस्य चूर्णिः गिहिअण्णतित्थियाणवायणा इत्यत्र सविशेषोऽस्यो भवा अण्णउत्थियं वा गारत्थियं वा वाएति अण्णातित्थिया अण्णातितित्थिणीउ भवा गिहत्था गिहत्थी उवि भवे कारणं वाएज्जा विवज्जाए गाहा गिहिअण्णपासंडिया पव्वज्जाभिमुहं सावगं वा छज्जीवणियं जाव सुत्तओ अत्थओ जाव पिंडेसणा एस मिहत्थाइसुअवणावि श्रीगच्छाचारप्रकीर्णकावचूर्णौ मते ११ ननु प्रकीर्णकालेखनैः प्रतिपदमस्माकं निरासक्रियते भवद्भिस्तेषां तु प्रामाण्यं नास्माभिः स्वीक्रियतेऽमीषां वालवृन्दं प्रकीर्णकानां विशिष्टप्रमवस्तपःशिष्यप्रणीतत्वेन प्रत्येकबुद्धप्रणीतानां च वा सूत्रमां प्रमाणत्वादिति यथाप्रोक्तं अत्र शिष्यः प्रश्नयति । प्रकीर्णकानामुत्पत्तिः किं तीर्थङ्करात् गणधरात् शिष्याद्वा प्रत्येकबुद्धाद्वा उच्यते तीर्थङ्करदत्तदीक्षितमुनेः प्रकीर्णकानामुत्पत्तिरिति यदुक्तं नन्दीसूत्रे। से किं तं अंगबाहिरं अंगबाहिरं दुविहं पन्नत्तं तं। आवस्सयं च आवस्सयवइरित्तं च से किं तं आवस्सयं छव्विहं पन्नत्तं सामाइयं १ चउवीसत्थयं २ वंदणयं ३ पडिक्कमणं ४ काउस्सग्गो ५ पच्चक्खाणं ६ सेत्तं आवस्सयं । से किं तं आवस्सयवइरित्तं २ । दुविहं पन्नत्तं कालियं च उक्कालियं च से किं तं उक्कालियं २ अणेगविहं पन्नत्तं तं जहा दसवेयालियं १ कप्पियाकप्पियं २ चुल्लकप्पसुयं ३ महाकप्पसुयं ४ उववाइयं ५ रायपसेणियं ६ जीवाभिगमो ७ पन्नवणा ८ महापन्नवणा ९ पमायप्पमायं १०

नंदी ११ अणुओगदाराइं १२ देविंदत्थउ १३ तंदुलवेयालियं १४ चंदाविज्जयं १५ सूरपण्णत्ती १६ पोरिसिमंडलं १७ मंडलप्पवेसो १८ विज्झाचरणविणिछउ १९ गणिविज्जा २० झाणविभत्ती २१ मरणविभत्ति २२ आयविसोही २३ वीयराय सुहं २४ संलेहणासुअं २५ विहारकप्पो २६ चरणविही २७ आउरपच्चक्खाणं २८ महापच्चक्खाणं २९ एवमाइसेतं उक्कालियं । सेकिंतंकालियं २ अणेगविहं पण्णत्तं तं जहा उत्तरज्झयणयाइं १ दसाउ कप्पो ३ ववहारो ४ निसीहं ५ महानिसीहं ६ इसिभासियाइ ७ जंबूदीवपण्णत्ती ८ दीवसागरपण्णत्ती ९ चंदणपन्नत्तो १० खुड्डियाविमाणपविभत्ती ११ महल्लियाविमाणपविभत्ती १२ अंगचूलिया १३ वग्गचूलिया १४ विवाहचूलिया १५ अरुणोववाए १६ वरुणोववाए १७ गरुलोववाए १८ धरणोववाए १९ वेसमणोववाए २० वेलंधरोववाए २१ देविंदोववाए २२ उट्ठाणसुए २३ समुट्ठाणसुए २४ नागपारियावलिया २५ निरयावलियाउ २६ कप्पियाउ २७ कप्पवडिंसियाउ २८ पुप्फियाउ २९ पुप्फ-चूलियाउ ३९ वह्नीदसाउ ३१ एवमाइं आइं चउरासीइं पइन्नगसहस्साइं भगवउ अरहउ उसहसामिस्स आइतित्थयरस्स तहा संखिज्जाइं पइन्नग सहस्साइं मज्झिमगाणं जिणवराणं चउद्दस पइन्नग सहस्साणि भगवउ वद्धमाणसामिस्स अहवा जस्स जत्ति यासीसाउप्पंतिया एवेण इयाए कम्मियाए पारिणामियाए चउविहाए बुद्धीए उववेयातस्स तत्तियाइं पइण्णगसहस्साइं पत्तेयबुद्धावितत्तिया चेव सेतं कालिअं आवस्सय वइरित्तं सेतं अणंगपविट्ठं एतत्पाठटीकायां यदुक्तं—श्रीमलयगिरिसूरिभिस्तत्द्वृत्तिदेशो यथा "एवमाइयाइं" इत्यादि कियंतिनामनाम-ग्राहमाख्यातुं शक्यन्ते, प्रकीर्णकानि तत एवमादीनि चतुरशीतिप्रकीर्णकसहस्राणि भगवतोश्रीऋषभस्वामिनस्तीर्थंकृतस्तथा संख्येयानि प्रकीर्णकसहस्राणि मध्यमानामजितादीनां जिनवरेन्द्राणां तीर्थङ्कराणां एतानि च यस्य यावन्ति भवन्ति तस्य तावन्ति प्रथमानुयोगतो वेदितव्यानि २ तथा चतुर्दशप्रकीर्णकसहस्राणि भगवतोऽर्हतोवर्द्धमानस्वामिनः इयमत्र भावना इह भगवतऋषभस्वामिनश्चतुरशीतिसहस्र-संख्याश्रमणाआसीरन् ततः प्रकीर्णकरूपाणि वाऽध्ययनानि कालिकोत्कालिकभेदभिन्नानि सर्वसंख्येया चतुरशीतिसहस्रसंख्यान्यभवन्

रूपमिति चतुर्थ्यते इह यद्भगवदर्हदुपदिष्टं श्रुतमनुसृत्य भगवतः श्रमणा विरचयन्ति, तत्सर्वं प्रकीर्णकमुच्यते, अथवा श्रुतमनुसरन्तो यदात्मनो वचनकौशलेन धर्मदेशनादिषु ग्रन्थपद्धतिरूपतया भाषन्ते, तदपि सर्वं प्रकीर्णकं भगवतश्च ऋषभस्वामिन उत्कृष्टा श्रमणसम्पदासीत्, चतुरशीतिसहस्रप्रमाणा ततो घटन्ते, प्रकीर्णकान्यपि भगवतश्चतुरशीतिसहस्रसंख्यानि एवं मध्यमतीर्थकृतामपि संख्येयानि प्रकीर्णकसहस्राणि भावनीयानि भगवतस्तु वर्द्धमानस्वामिनश्चतुर्दश श्रमणसहस्राणि तेन प्रकीर्णकान्यपि भगवतश्चतुर्दशसहस्राणि अत्र द्वे मते एके सूरय एवं प्रज्ञापयन्ति, इदं किल चतुरशीतिसहस्रादिकं ऋषभादीनां तीर्थकृतां श्रमणपरिमाणं प्रधानसूत्रविरचनसमर्थान् श्रमणानधिकृत्य वेदितव्यं इतरथा पुनः सामान्यश्रमणा प्रभूततरास्तस्मिन् तस्मिन् ऋषभादिकाले आसीरन् अपरे पुनरेवं प्रज्ञापयन्ति, ऋषभादितीर्थकृतां जीवतामिदं चतुरशीतिसहस्रादिकं श्रमणपरिमाणं प्रवाहतः पुनरेकैकस्मिन् तीर्थे भूयांसः श्रमणा वेदितव्याः तत्र ये प्रधानसूत्रविरचनशक्तिसमन्विता सुमसिद्धासहन्त्वाऽऽत्मकामिका अपि तीर्थे वर्तमानास्तथाधिकृताः द्रष्टव्याः एतदेवमतान्तरमुपदर्शयन्नाह अहवेत्यादि अथवेति प्रकारान्तरो-पदर्शने यस्य ऋषभादेस्तीर्थकृतो यावन्तः शिष्यास्तीर्थे औत्पत्तिक्या वैनयिक्या कर्मजया पारिणामिक्या चतुर्विधया बुद्ध्योपेता समन्विता आसीरन् तस्य ऋषभादेस्तावन्ति प्रकीर्णकसहस्राणि अभवन् प्रत्येकबुद्धा अपि तावन्त एव अत्रैके व्याचक्षते इह एकैकस्य तीर्थकृतस्तीर्थेऽप रिमाणानि प्रकीर्णकानि प्रकीर्णककारिणामपरिमाणत्वात् । केवलमिह प्रत्येकबुद्धरचितान्येव प्रकीर्णकानि द्रष्टव्यानि प्रकीर्णकपरिमाणेन प्रत्येकबुद्धपरिमाणप्रतिपादनात् स्यादेतत्प्रत्येकबुद्धानां शिष्यभावो विरुध्यते तदेतदसमीचीनं यतः प्रव्राजकाचार्यमेवाधिकृत्य शिष्यभावो निषिध्यते न तु तीर्थकरोपदिष्टशासनप्रतिपन्नत्वेनापि ततो न कश्चिद्दोषः तथा च तेषा ग्रंथः । इह तित्थे अपरिमाणा पइण्णगासामिय परिमाणवन्न किं तु इह सुत्ते पत्तेयबुद्धपणीयं पइण्णगं भाणियव्वं कम्हा जम्हा पइण्णगपरिमाणेण चेव पत्तेयबुद्धपरिमाणं करेइ भणियं पत्तेयबुद्धावि तत्तिया चेव त्ति । चोयग आह नणु पत्तेयबुद्धा सिस्सभावो य विरुज्झए आयरिओ आह । तित्थगरपणीयसासणपडिवन्नत्तणओ

तस्सोसो हवंनि। अन्ये पुनरेवमाहुः सामान्येन प्रकीर्णकैस्तुल्यत्वात्प्रत्येकबुद्धानामत्राभिधानं न तु नियोगतः प्रत्येकबुद्धरचितान्येव प्रकीर्णकानोति। सेतमित्यादि तदेतत्कालिकं तदेतदावश्यकव्यतिरिक्तमिति श्रीनन्दीसूत्रटीकायां श्रीगच्छाचारप्रकीर्णकावचूर्णावपि तथैव पुनः केचित्कुमतयः श्रावकाणामुपधानोद्वहनं न मन्वते तच्च सिद्धान्ताऽपरिज्ञानं यदुक्तं—श्रीसमवायाङ्गसूत्रे संख्याक्रमसमाप्त्यनन्तरं उपासकदशाङ्गसूत्रवर्णके यतः उवासगदसासुणं उवासगाणं तवोवहाणाइं इत्यादिनात्र श्रावकोपधानोद्वहनस्योक्तत्वात् न च वाच्यं अत्र च वक्ष्यते, इत्युक्तं तत्र तु उक्तं न दृश्यते, इत्यादि कालेन ग्रन्थस्य व्यवच्छिन्नत्वात् अन्यथा स्थानद्विगुणतयाऽस्य भगवत्यादिभ्योऽपि महत्तरताया युज्यमानत्वात् अन्येषामप्यत्र वाच्यतयोक्तानां तत्र नोक्तानां जल्पानामनङ्गाकार्यतापत्तेश्चेतिदिक् उपधानाक्षरावबोधाय च साद्यन्तमिदं सूत्रं लिख्यते सेकिंतं उवासगदसा उवासगदसासुणं उवासगाणं नगराइ उज्जा चेति वणराया अम्मासमो धम्मायरिया धम्मकहा इह परलोयं इड्ढि विसेसाउवासयाणं च सीलव्वयवेरमणपच्चक्खाणपोसहोववासपडिवज्जणतातोसुअपरिग्गहा तवोवहाणाइं पडिमातो उवसगासंलेहणाउभत्तपचक्खाणपाउवगमदेवकुलेषु पुण्णबोहिअंतकिरियासुयआयविज्जंति उवासमदसासुणं उवासयाणं रिध्धिविसेसापरिसावित्थरा धम्मसवणाण बोहिलाभ अभिगमसम्मत्तविसुध्धताथिरत्तं मूलगुणुत्तरगुणअतियाराठितिविसेसायबहुविसेमापडिमाभिग्गहगहणपालणाउ उवसग्गाहितासणाणिरुवसग्गया यत वायविंचित्ता सीलव्वयगुणवेरमणपच्चखाणपोसहोववासा अपच्छिममारणंतियायसंलेहकोसणाहिं अप्पाणं जहयभावइत्ता बहुणि भत्ताणि अणसणाए छेयइत्ता उववण्णा कप्पवरविमाणुत्तमेसु जह अणुभवति सुरवर विमाणपुंडरीएसु सुक्खाइं अणोवमाइं कमेणभोत्तूण उत्तमाइं तउ आउक्खएणं चुयासमाणा जह जिणमयंमिबोहिलद्धूणयसंजमुत्तमंतमरउव्वविप्पमुक्का उ वेंति जह अक्खयं सव्वं दुक्खमोक्खंएते अन्नेय एवमादाय इति वृत्तिर्यथा सेकिंतमित्यादि अथकास्ता उपासशकदशा उपासकः श्रावकास्तद्गतक्रियाकलापप्रतिबद्धाद्वादशाध्ययनोपलक्षिता उपासकदशास्ता एवाह उवासगदसाणं उपासकानां नगराणि उद्यानानि चैत्यानि वनखण्डराजान अम्बा-

व्याख्यायत इति प्रक्रमः इति समवायाङ्गे संख्याक्रमसमाप्त्यनन्तरं अत्र परः प्राह—ननु ये उपधानोद्वहनं न स्वीकुर्वंते ते कीदृशा इति उच्यते अत्रोत्तरं अथ केचिदुपधानोद्वहनं न स्वीकुरुते तेऽवश्यं वहुलसंसारिणो ज्ञातव्याः इति महानिशीथसूत्रे तथा च तत्पाठः। जे केइ अणुवहाणेणं सुपसत्थं भाणं अहीयंति अज्झावयं तवा अहीयं निज्जा अज्झावयंते इवासमणुजाणंति तेणं महापावकम्मे महतीसुपसत्थनाणस्सासायणंपकुव्वंति से भवयवं जइना किं पंचमंगलस्सणं उवहाणं कायवं पढमं नाणं तउदयादयाए सवजीवपाणभूअसत्ताणं अत्तसमदरिसित्तं। "इति महानिशीथसूत्रे तृतीयाध्ययने" तथा "विचाररत्नाकरग्रन्थेऽपि" तथैव अत्र परः शङ्कां कुर्वन्नाह—नन्वत्र सवजीवपाणभूअसत्ताणमित्यत्रकस्तात्पर्यार्थः उच्यते, पाण इति शब्देन प्राणास्ते द्वीन्द्रिय त्रीन्द्रिय चतुरिन्द्रिय जीवानं विकलाक्षाणामिति यावत्प्राणा इति संज्ञा, तथा पञ्चेन्द्रियप्राणिनां जीवा इति संज्ञा, तथा वनस्पतिकायजीवानां भूता इति संज्ञा, शेषाणां सत्वा इति संज्ञा, यतः प्रोक्तं "श्रीआचाराङ्गसूत्रटीकायां प्रथम श्रुतस्कन्धे" शस्त्रपरिज्ञाख्याध्ययनस्य षष्ठोद्देशकटीकायां, तथा तस्यैव दीपिकायामपि, श्लोकः। प्राणाद्वित्रिचतुः प्रोक्ता भूतास्तु तरवोमताः। जीवा पञ्चेन्द्रिया ज्ञेयाः शेषाः सत्वाः प्रकीर्त्तिताः ॥१॥ इति षड्दर्शनसमुच्चयग्रन्थादिष्वपि तथैव प्रोक्तमस्तीति तथा "श्रीआचाराङ्गसूत्र दशवैकालिकसूत्रादिष्वपि पठ्यते" "सवे जीवा सवे पाणा सवेभूआ सवेसत्ता न हंतवा"। इत्यादि तथा पाक्षिकसूत्रेऽपि प्रोक्तं—यतः सव्वेसिं पाणाणं सव्वेसिंभूआणं सव्वेसिं जीवाणं सव्वेसिंसत्ताणमिति। तत्रापि तथैवाऽवगन्तव्यं अत्र समस्तसिद्धान्तकलाकलापलुंपाकः लुंपाककुमती प्राह—ननु प्रतिपदं महानिशीथसूत्रवचनैरस्माकं निराक्रियते, भवद्भिः परं महानिशीथसूत्रं प्रमाणमप्रमाणं वेति, अत्रोत्तरं भो ? लुंपाकनतिन् इदं तव वचः, प्रचुरमदिरारसस्वादाऽऽस्वादकमदान्धपुरुषवचनमिवावभासते कथमिति चेदुच्यते अस्मादृशां सम्यग्दृष्टिजीवानां तु महानिशीथसूत्रं प्रमाणमेव त्वत्सदृशां मिथ्यादृष्टिजीवानां तु कुमतिकुमतवल्लित्रनलवनप्रवरतरतरवारिसमानं प्रवचनसोभाकारिमहानिशीथसूत्रं कथंप्रमाणं भवेत्, तत्सूत्रं तु सम्यग्दृशां प्राणिनां प्रमाणमेव यतः केचिच्चाऽज्ञानिनो वराकाः श्रीजिनोक्ताक्षरमात्रमप्यश्रद्दधानोऽनन्तसंसारीति विदन्तोप्यवश्यं भाविभावा-

उवहाणे तहाअ निन्हवणे । वंजण मत्थ तदुभए, अट्ठविहो णाणमायारो ॥ १ ॥ आचारः कालाद्यष्टप्रकारो ज्ञानाचारः, तत्रापि कालादिष्वष्टस्वप्याचारेषु प्रवचने उपधानं महाचारः, सम्यग्वर्णाद्युच्चारापेक्षया महान् आचार इत्यर्थः। उपधानाऽभावे तु या अनाज्ञा सा आगमेषु महत्याशातना भवति, जिनेश्वराण्या अभिधानेन महाशातना जायत इति, येन कारणेनोपधानाभावोऽनाज्ञा, सा च महत्याशातना तेन कारणेन तया आशातनया जीवानामनन्तभवभ्रमणं एव युक्तं आशातनायास्तद्धेतुत्वात्। यदुक्तमुपदेशमालाग्रन्थे, गाथा। आसायण मिच्छत्तं, आसायणवज्जणाओ सम्मत्तं। आसायणा निमित्तं, कुवइ दीहं च संसारं ॥ १ ॥ तथैव कुपक्षकौशिकसहस्त्रकिरणे हीरविजयसूरिप्रदत्त प्रवचनपरिज्ञानाम्नि प्रकरणग्रन्थे द्वितीयविश्रामेऽपि महोपाध्याय श्रीधर्मसागरगणिभिः प्रोक्तमस्ति—तथैव प्रवचनपरिक्षायां प्रोक्तं गाथा । णणु उवहाणा भावे, मंगलमाईण जं च अज्झयणं । जिनवरपमुहासायण, अणतसंसारया हेउ ॥ १ ॥ अत्र परः प्राह—ननू—पधानोद्वहनमन्तरेण "मंगलमाईणत्ति" पंचमंगलमहाश्रुत स्कन्धादीनामध्ययनं यत् तज्जिनवरप्रमुखाणामर्हत्सिद्धाचार्योपाध्यायसाधूनामाशातनाऽनन्तसंसार हेतुर्भवेत्, इति पूर्वोक्तमहानिशीयसूत्रवचनेन यथाऽनुपधानेनाधीतेऽध्यापयति, अध्यापयतमन्यमनुजानीते स आशातयति सूत्रार्थोभयरूपमागमं गुरं त्रिकालभावि तीर्थङ्करसिद्धाचार्योपाध्याय साधूंश्च, तत आशातना प्रत्ययं तत्कर्म वध्नाति येन चतुरशीतियोनि लक्षसम्भवानि नानादुःखान्यनुभवन्ननन्त संसारं परिभ्रमति । यस्तूपधानो द्वहन पूर्वकमेतान्यधीते, स आशातनाजन्य कर्मवन्धरहितः सुलभबोधिको भूत्वा संसारोच्छेदं विधत्ते । तथा यावत्प्राणी पुण्यपापयोर्विशेषं न जानीते तावत्तस्य पञ्चमंगलं न देयमिति । अत्रानुपधानिनो नमस्काराध्ययनेऽनन्तसंसारिता प्रोक्ता इति । यद्येवं प्रागुक्तवचनं सम्यग् भवेत्तर्हि नियमात्ततुः पञ्चविवर्जितः सर्वोऽपि श्रावकश्राविकावर्गोऽनन्तसंसारी भवेदिति । भावार्थस्त्वयं प्रायः श्रावककुलोत्पन्नानामुपधानवहनमन्तरेणैव नमस्काराध्ययनाध्यापनादि दृश्यते तेषां तदध्यापकानां वा कथमनन्तसंसारिता युक्तेति, तेन कारणेन प्रागुक्तलक्षणेन तन्महानिशीथसूत्रमस्माकमप्रमाणं । अस्योत्तरं भो ! भो ! कुमते ! कुमति

वा, वर्त्तमानकाल चिन्तायां विराधकमनुष्याणां संख्येयत्वात् । अणुपरियट्टंतित्ति अनुपरावर्त्तन्ते भ्रमन्ती त्यर्थः । भविष्यति काले विराधनाफलमुपदर्शयति, इच्चेइयंमित्यादि इदमपि पाठसिद्धं, नवरं परियट्टिस्संतित्ति अनुपरावर्त्तिष्यंते पर्यटिष्यन्तीत्यर्थः । तदेवं विराधनाफलं त्रैकालिकमुपदर्श्य सम्प्रत्यारोधनाफलं त्रैकालिकमुपदर्शयति, इच्चेइयमित्यादि सुगमं नवरं वइवइसुति व्यतिक्रान्तवन्तः संसारकान्तारमुल्लंघ्यमुक्तिमवाप्ता इत्यर्थः। वईयंतित्ति व्यतिक्रमन्ते वइवइस्संतित्ति व्यतिक्रमिष्यन्ति एतच्च त्रैकालिकविराधनाफलमाराधनाफलं च द्वादशाङ्गस्य सदावस्थायित्वे सति युज्यते, नान्यथा, ततः सदावस्थायित्वं तस्याह । इति श्रीनन्दीसूत्रवृत्ति वचनात् द्वादशाङ्गी विराधका जीवा अनन्तान् भवान् पर्यटन्ति । तथा पुनः निज कुमतप्रपञ्चमाविष्कुर्वन् लुंपाकमती प्राह–ननु महानिशीथसूत्रं द्वादशाङ्गी मध्ये नास्तीति चेदुच्यते, भो लुंपक ! यदि द्वादशाङ्ग बाह्यत्वात् महानिशीथ न प्रमाणं, तर्हि औपपातिक–राजप्रश्नीय–जीवाभिगम–प्रज्ञापना–नन्दिः–अनुयोगद्वारादीनि सूत्राण्यपि द्वादशाङ्ग–बाह्यानि सन्ति, ततः तान्यपि तव कथं प्रमाणं भविष्यन्ति ? । तानि च तत्प्रमाणभूतानि तदा बलात्कारेण महानिशीथसूत्रमपि प्रमाणं भविष्यत्येव, नन्दीसूत्रादिषु निसीहं महानिसीहमिति प्रोक्तत्वात् तथा श्रावककुलोत्पन्नानामुपधान वहनमन्तरेणैव नमस्काराध्ययनाध्यापनादि दृश्यते, तेषां तदध्यापकानां वा कथमनन्तसंसारिता युक्तेति चेदुच्यते–येषामुपधान वहनेच्छा वर्त्तते, तेषां सामायिकादिसूत्राणां पठनयुक्तमेव, यदुक्तं प्रवचनपरिक्षा प्रकरणे "गाथा" "उवहाणवहण आसा, जुत्तमेव अज्झयणं। जहंजाछज्जीवणिअं, अहिज्झ पवज्ज आसाए ॥ १ ॥ एतद्गाथावृत्तिलेशो, यथा उवहाण० उपधान वहनाशा सामर्थ्ये सति प्रस्तावे उपधानोद्वहनं करिष्यामि, इति रूचीतया युक्तानां उपधानं श्रद्धानपूर्वकतद्वहनाशा कलितचेतसामध्ययनं सामायिकादिसूत्राणां पठनं युक्तमेव, दृष्टान्तमाह–यथा प्रव्रज्याशया दीक्षाग्रहणेच्छया यावत् षट्जीवनिकं षड्जीवनिकाध्ययनपर्यन्तमध्यापये छुतमिति गम्यं । यदुक्तं श्रीआवश्यकसूत्रचूर्णौ, यथा " सावगस्स जहण्णेणं तं चेव उक्कोसेण छज्जीवणिआसुत्तओवि अत्थओ, वि पिंडेसणाज्झयणं न सुत्ततो,

पोसहपमुहाविसुज्जए तेसिं । एवं सेहेविमुभं, आवस्सय जोगकिरियट्ठा ॥ १ ॥" इति पुनरपि कुमतमदिरारसवासितमुखो लुंपाकमती क्वचन दुर्गंधं मुखात् निष्कासयन्नाह—नूपधानोद्वहनाऽऽकांक्षया सामायिकाद्यऽध्ययनमभ्युपगम्यते, तर्हि कथं नाचाराङ्गादिष्वपीत्यति प्रसङ्गः, इति चेदुच्यते, भो लुंपक ! यस्मात् आवश्यकश्रुतस्कन्धो निजपरयोः क्रियासु श्रीआवश्यकश्रुतास्कन्धस्तद्‌तिरिक्त श्रुताराधन क्रियासु उपयुज्यते उपयोगो स्यात् तेन कारणेन दीपवत् प्रथममधिक्रियते । उपधानयोगोद्वहनात् पूर्वमेवाभ्यस्यते न पुनः शेषश्रुतमाचाराङ्गादिश्रुत-मिति । भावार्थस्त्वयं, आवश्यकश्रुतस्कन्धोऽभ्यस्तः, आवश्यकश्रुतस्कन्धस्यैवाराधनहेतवे यानि उपधानानि तत्सम्बन्धिनीषु क्रियासूपयोगी स्यात् अन्यथा तद्विधेरेवासम्भवात् । तथाऽपरक्रियासु श्रीआचाराङ्गप्रमुखाऽखिल श्रुताराधन हेतुयोगक्रियास्वपि, तत्र दृष्टान्तमाह यथा प्रदीपः, स हि स्वपरविषयक प्रकाशयन् क्रियोपयोगी, यथा कश्चिद्वदति यदहं प्रदीपं घटादिकं च पश्यामीति । अन्धकारे प्रदीपघटादि दिदृक्षुणा प्रथमं प्रदीपएवाधिक्रियते प्रथमं प्रगुणी क्रियते इति, प्रदीपमन्तरेणोभयोरपि प्रकाशाऽसम्भवात् न पुनस्तद्वत् शेषमाचाराङ्गादिश्रुतमुपधानयोगाभ्यां पूर्वमभ्यसनीयं, यतो नाचाराङ्गादिश्रुतं स्वोपधानक्रियोपयोगि किं चाऽऽचाराङ्गाद्यऽध्ययनं प्रव्रजितस्यापि वर्षत्रयपर्यायाद्यतिक्रमेऽनुज्ञातं तत्तु नवमकाव्यव्याख्यायायामग्रे वक्ष्यते । अथ पुनरपि श्रीमहानिशीथाऽप्रामाण्यं व्यवस्थापयितुं पूर्णिमापक्षकक्षीकारः शंकां कुर्वन्नाचचक्षे, ननु भोः! यथा श्रीमहानिशीथे उपधानविधि र्न, तथाऽन्यत्र कुत्रापि न दृश्यते, तेन कारणेनाऽस्माकं मह निशीथसूत्रमप्रमाणमिति । अथोत्त-रमाह भो पूर्णिमापक्षकक्षीकार ! इदमपि तव वचनमत्युन्मत्तप्रलापवत्, यथा यद्येवं पूर्वोक्तं तर्हि तव मते सर्वमपि श्रुतं परिहर्त्तव्यं भवेत्, तत्कथमिति चेदुच्यते, लेपोपासकप्रमुखाः श्रीसूत्रकृदङ्गद्वितीयश्रुतस्कन्धोक्तलेपश्रावकप्रमुखाः बाहुल्ये नैकैकसूत्रोक्ताः एकैकस्मिन् सूत्रे पठिताः सन्तीति । नहि लेपश्रावकवर्णनं अन्यत्र तथोपलभ्यते, तथा च द्वितीयाङ्गमपि परिहर्त्तव्यं, एवमाचाराङ्गादयोऽपि, नहि श्रीआचाराङ्गोक्तः सर्वोपि विचारः सर्वत्रोपलभ्यते तथोपलम्भे च सर्वेषामप्यैक्यापत्ते रित्यादि स्वयमेव पर्यालोच्यमिति, तस्मात्कारणाज्जिनेन्द्रशासनं आचा-

ततः पृथक्भूतः स्कन्धः सिन्धुकुम्भाम्भो भवति । अयं भाव ततः पृथग्भूत स्कन्धोऽयं, सिंधु-
पद्मोपलक्षितह्रदस्य जलदेशः तदंशभूतः सन् ततः पृथक्भूतः स्कन्धाद्यनेकव्यपदेशभाक्प्रदर्शितः, तथा तौ करोऽपि नरजातेः पृथग्भूतः
नदीयं, कुम्भाम्भइदमित्यादि व्यपदेशं लभते, अत्र देशोऽपि स्कन्धाद्यनेकव्यपदेशभाक्प्रदर्शितः, तथा तौ करोऽपि नरजातेः पृथग्भूतः
बुध्या ततः पृथग् विवक्षितो देवो भवति, देवत्वं भजते न पुनस्तत्पतितः, तत्र मनुष्येषु पतितस्तत्पतिनः मनुजोऽयमिनि सामान्यनाम्ना
पतिनोऽपीति, व्यपदेशभेदोऽपार्थको दर्शितः इति । एवममुना प्रकारेण निश्चितं सामायिकात्पृथग्भूतः पञ्चमङ्गलः "नमो अरिहंताणमित्यादि
पढमं हवइ मंगलमिति" पर्यन्तं नरस्कारलक्षणः स्कन्धो भण्यते, सामायिकादपृथग्भूतविवक्षायां सामायिकाध्ययनसम्बद्धविवक्षायां सामा-
यिकाध्ययनैकदेशः एष पण्डितानामुपदेश इति। अथ पुनरपि पूर्णिमापक्षकक्षीकारः आशङ्कां कुर्वन् प्राह—ननु शक्रस्तवविषयमुपधानद्वाहिनां
पञ्चत्रिंशद्दिनमानं, तच्च शक्रस्तवे सौधर्मेन्द्रस्य न सम्भवेऽपि तर्हि मनुष्याणां कथ सम्भवेत्? अपि तु न सम्भवेदिति। भो भो ! एतत्त्वामुना
प्रकारेण विकल्पः महापापकारी महामोहनीयकर्मबन्धहेतुकोऽयं विकल्प इत्यर्थः, अथ राकारक्तकृतविकल्पं निराकरोति। शक्रस्तवस्तु द्विविधः
देवकृतः शक्रादिदेवजनित इत्यर्थः, तथा गणधरेण कृतश्च तत्रैकश्चकारो देवकृतेऽप्यनेकभेदसूचकः नहि देवकृतोऽपि शक्रस्तव एकस्वरूपेण
स्यात् किन्तु शक्रविजयसूर्याभादिदेवा यथाऽवसरं कर्मक्षायोपशमवैचित्र्यात् भिन्नान् भिन्नान् शक्रस्तवान् पठितवन्तः, अत एव देवकृताः शक्र-
स्तवाः अनियत पाठा इति। ननु एवं गणधरेण कृतः शक्रादिदेवैकृतः शक्रस्तवो भिन्नस्तर्हि गणधरेण कृतस्यापि शक्रस्तव इत्यभिधानमस्ति
परं गणधरस्तव इत्यभिधानं कथं नोच्यते? इति चेदुच्यते भो राकारक्त! सर्वेषामपि शक्रस्तवाभिधानं च प्रायः शक्रकृतशक्रस्तवानुकारित्वादेव,
एवं गणधरकृतेऽपि बोध्यं द्वयोः शक्रगणधरयोः स्वकृतत्वात् उपधानमसम्भवविभवेदिति उक्तं च "गाथा" सक्कत्थओ अ दुविहोदेवकय तहय
गणहरेण कओ। दुन्हं सक्कयत्तणओ, असंभवि दुज्जओवहाणं ॥१॥ अथ पुनरपि पूर्णिमापक्षकक्षीकारः समाचचक्षे—ननु किमसम्भवीति चेदु-
च्यते अत्रोत्तरं उद्देशसमुद्देशानुज्ञाप्रमुखोपधानक्रिया अविच्छिन्नपरम्पराऽऽयाताः गुरुपूर्वेऽध्ययने भवन्ति गुरुरुद्देशाद्युपदेष्टा स एतत्पूर्वं यस्यैवं-

देवदिन्नस्य चाभवत् । एकाछेकाग्रधौरेयी, सौभाग्यस्य
कारकः । देवदत्तोभिधानेन, देवदिन्नश्च तत्सुतः ॥ ४४६ ॥ गृहणी दुर्गिला नाम, कटाक्षैर्मन्मथेषुभिः ॥ ४४८ ॥ सर्वाङ्ग हेमाभरणा,
महानिधिः ॥ ४४७ ॥ जगाम सान्यदा नद्यां, जलमज्जन हेतवे । क्षोभयन्ती मनोयूनां, दर्शयन्ती स्तन द्वयम् । शनै रुत्तारयामास,
भ्रान्तीवासोभिरुज्ज्वलैः । नदीतीरमलङ्चक्रे, सामूर्त्तीवाम्बुदेवता ॥ ४४९ ॥ दुर्गभूमि स्मरस्येव, संव्यानार्धेन सा कुचौ ॥ ४५१ ॥
सा कञ्चुकमुरुस्तनी ॥ ४५० ॥ कञ्चुकं चोत्तरीयं च, वयस्यायाः समर्प्य तु । तन्वङ्गी तिरयामास, दूरादपि तरङ्गिणी ।
विदग्धालीजनालापै, र्दग्धा जीवितमन्मथा । मन्दं मन्दं मरालीव, तीरात्नीरं विवेश सा ॥ ४५२ ॥ तरङ्ग हस्तैरुत्क्षिप्तै, पाणिभ्यां वार्ये-
तामालिलिङ्गसर्वाङ्ग, चिरादृष्टांसखीमिव ॥ ४५३ ॥ त्रस्तसारङ्गनयना, सा चिक्रीडिषु रभसा । नौरिवारित्र दण्डाभ्यां, नृत्यदंभोजविभ्रमौ ॥ ४५५ ॥ अनेक
दारयत् ॥ ४५४ ॥ तस्याः स्नन्त्याश्चिरंवारि, विकिरन्त्याः कुतूहलात् । शुशुभाते चलौ पाणी, वार्धिमध्ये सुरीमिव ।
वस्त्राविस्रस्त, केशाधौतरदच्छदा । रतोत्थितेव साऽलक्षि, जलक्रीडा परायणा ॥ ४५६ ॥ तां क्रीडन्तीं नदी मध्ये, दृष्ट्वा क्षोभात्पपाठ
ददर्शनागरयुवा, दुःशीलः कोऽपि पर्यटन् ॥ ४५७ ॥ तां जलक्लिन्न सूक्ष्मैक, वसनाच्छादितामपि । सुव्यक्तसर्वावयवां, साऽप्यपाठीत्
स ॥ ४५८ ॥ सुस्नातं ते नदी, पृच्छ–त्यमी-पृच्छन्ति चांह्रिपाः । पृच्छाम्यहं च त्वत्पाद–पद्मयो निपतन्नपि ॥ ४५९ ॥ सुधासेकोपमं वचः ।
स्वस्ति नद्यै–चिरनन्दन्तु चांह्रिपाः । सुस्नातपृच्छकानां च, करिष्यामि समीहितम् ॥ ४६० ॥ मनोरथलतोद्भेदे, ददर्शोचैर्मुखान्बालान्फलपाता-
तस्याः श्रुत्वा तथैवास्या–द्धुको राजाज्ञयेव सः ॥ ४६१ ॥ चिन्तयंश्च कथमिति–स एकस्य तरोरधः । यथेष्टं तत्फल
भिकाङ्क्षिणः ॥ ४६२ ॥ ततश्च स युवा लोष्टै, र्वृक्षशाखाः प्रपाडयन् । फलानि पातयामास, त्रटत्त्रटेति भूतले ॥ ४६३ ॥ देवदत्ताभिधस्य भोः ।
माति, दृष्टान्पप्रच्छ सोऽर्भकान् । नद्यां मज्जनकृतकेयं–नारी कस्या निकेतनम् ॥ ४६४ ॥ तेऽर्भकाः कथयामासु विहाय मज्जनक्रीडां, सद्यः स्वसदनं
स्नुषा स्वर्णकृत इय–मितश्चास्या निकेतनम् ॥ ४६५ ॥ दुर्गिलापि युवानं तं, ध्यायन्त्येकेन चेतसा ।

सङ्केतवासरम् । आख्यातिस्मानया भङ्ग्या, समाश्वसिहि हेमनः ॥ ४८७ ॥ सङ्केतस्थानमाचख्यौ, न साकेनापि हेतुना । अहो तत्सङ्ग-
मसुखा—न्तरायोऽद्यापि विद्यते ॥ ४८८ ॥ पुनश्च तापसी मूचे, न जानासि तदाशयम् । अनुरक्तैव मयि सा, भूयोऽपि मार्थयस्व ताम्
॥ ४८९ ॥ सर्वथा मा कृथा मात, निर्वेदं मत्प्रयोजने । भूयोऽपि गच्छानिर्वेदः, श्रीवल्लेर्मूलमादिमम् ॥ ४९० ॥ साप्यूचे तव नामापि,
कुलीना सहते न सा । स्थले जलारोपण व—द्दुष्करं ते समीहितम् ॥ ४९१ ॥ त्वदर्थसिद्धौ सन्देहो, निःसन्देहंतुभर्त्सनम् । अविल-
म्बेन यास्यामि, मुक्त्वा नाशां तथापि हि ॥ ४९२ ॥ इत्युक्त्वा त्वरितं गत्वा, तापसी स्वर्णकृद्वधूम् । भूयोऽप्युवाच वच—रमृतद्रवसोदरैः
॥ ४९३ ॥ आत्मानुरूपं रूपेण, तं युवानं रमस्वहे ! । गृहाण यौवनफलं, यौवनस्योचितं ह्यदः ॥ ४९४ ॥ दुर्गिला भर्त्सना पूर्वं, गले धृत्वा
रुषेव ताम् । अशोकवनिका मत्यग्, द्वारेण निरसारयत् ॥ ४९५ ॥ मुण्डापि ह्रीवशाक्रुष्ट, नीरङ्गी गोपिता नना । द्रुतं गत्वा तस्य पुंसः,
कथयामास खेदभाक् ॥ ४९६ ॥ भर्त्सितास्मि तया भाग्वद्, ग्रीवायां विधृता ततः । पश्चाद्वागशोकवना, न्तराम्निस्सारितास्मि च ॥४९७॥
दध्यौ च धीमान्स पुमा—नशोकवनिकान्तरे । आगच्छेरिति सङ्केतो, नूनं दत्तस्तया मम ॥ ४९८ ॥ ऊचे च तां भगवति ! न्यक्कारोऽयं
तया कृतः । सोढव्यो मे साहि दुष्टा, वाच्यानातः परं त्वया ॥ ४९९ ॥ ततश्च स युवा कृष्ण—पञ्चम्यां रजनी मुखे । जगाम पश्चिमद्वारे—
णाशोक वनिकान्तरे ॥ ५०० ॥ सोऽद्राक्षीद्वर्त्म पश्यंतीं तां दूरादपि सापि तम् । तयो स्वलितस्तारा—मेलकोऽभूद्विवाहवत् ॥ ५०१ ॥
प्रसारयन्तौ नयने, इव बाहू परस्परम् । रोमाञ्चोत्फुल्लसर्वाङ्गा—वुभौ तावभ्यधावताम् ॥ ५०२ ॥ तावग्रेऽप्येकमनसौ, तदात्वेकीभवत्तनू ।
सस्वजाते दृढतरं, समुद्रसरिताविव ॥ ५०३ ॥ वार्त्ताभिः प्रेमगर्भाभी, रतैर्नवनवैरपि । सम्भोग हृदमग्नौ तौ, द्वियामीमतिनिन्यतुः ॥
ततो रतायाः सर्वतो, भुंजगण्डोपधानयोः । सञ्चक्रामतयो र्निद्रा, नैवाम्भोजविभावरी ॥५०५॥ इतश्च देवदत्तोऽपि, कायचिन्तार्थमुत्थितः ।
जगामाशोकवनिकां, तौ शयानौ ददर्श च ॥ ५०६ ॥ अचिन्तयच्च धिगियं, स्नुषा पापीयसी मम । परपुंसा सह रत, श्रान्ता स्वपिति

दृष्टाऽन्यपुंसाशयिता मयाऽशोकवने निशि ॥ ५२८ ॥ दुःशीलेयमिति द्द्ध, प्रत्ययोत्पादनाय ते । वध्वाः पादात्समाकृष्य, गृहीतं नूपुरं मया ॥ ५२९ ॥ पुत्रोऽवददहं सुप्त–स्तदाऽभून्नापरः पुमान् । निर्लज्जेन त्वया तात, लज्जितोऽस्मि किमीदृशम् ॥ ५३० ॥ अर्प्यतां नूपुरं वध्वा, मा तातस्त्वं विगोपय । मयि सुप्ते तदा कृष्टं, प्रकृष्टा खल्वियं सती ॥ ५३१ ॥ स्थविरोऽवोचदाकृष्टं, यदाऽस्या नूपुरं मया । उपेत्य वीक्षितोऽसि त्वं, तदाहि शयितो गृहे ॥ ५३२ ॥ दुर्गिलोवाच न सहे, दोषारोपणमात्मनः । तातं प्रत्याययिष्यामि, कृत्वा दैवीमपि क्रियाम् ॥ ५३३ ॥ कुलीनायाः कलङ्का मे, वाङ्मात्रमपि हीदृशम् । न शोभते मषीविन्दु–रपि धौत सितांऽशुके ॥ ५३४ ॥ इह शोभन यक्षस्य, जङ्घान्तर्निस्सराम्यहम् । तज्जङ्घयोर्हि मध्येन, नाशुद्धो यातुमीश्वरः ॥ ५३५ ॥ पित्राऽथ सविकल्पेन, निर्विकल्पेन सूनुना । प्रतिज्ञा प्रतिपेदे सा, तस्याधार्ष्ट्यं महानिधेः ॥५३६॥ स्नात्वा धौतांशुकधरा, धूपपुष्पोपहारभृत् । सा सर्वबन्धु प्रत्यक्षं, यक्षं पूजयितुं ययौ ॥५३७॥ तस्या यक्षं पूजयन्त्या, जारः सङ्केतितः स तु । अलगद्ग्रहिलीभूय, कंठदेशेकवर्गवत् ॥५३८॥ अपास्यत गले धृत्वा, जनैर्ग्रहिल इत्यसौ । पुनः स्नात्वा च सा यक्ष, मर्चित्वैवं व्यजिज्ञपत् ॥ ५३९ ॥ कदापि हि मया स्पर्शि, पुमान्नान्यः पतिं [illegible] । ग्रहिलोऽयं तु यत्कण्टे [illegible] प्रत्यक्षमेव च ॥ ५४० ॥ पत्युर्मत्तद्वयान्नान्यो, लग्नश्चेन्मत्तनौ पुमान् । तदा मे शुद्धिदो भूयाः, सत्याः सत्यप्रियोऽसि हि ॥ ५४[illegible] ॥ यक्षोऽपि या वदाविष्टः, किं करोमीति चिन्तया । तावत्तज्जङ्घयोरन्त–स्त्वरितं निर्जगाम सा ॥ ५४२ ॥ शुद्धाशुद्धेति तत्कालं, जनं तु शुल्कारिणि । पुष्पदामगले तस्या, राजाध्यक्षानि चिक्षिपुः ॥ ५४३ ॥ वाद्यमानेन तूर्येण, दृष्टै र्बन्धुजनैर्[illegible] । स्वीकृता देवदिन्नेन, सा ययौ श्वशुरौकसि ॥ ५४४ ॥ नूपराकर्षणोद्भूतं, कलङ्क मद तारयत् । इति सा तत्प्रभृत्यूचे, जनैर्नूपुरपण्डिता ॥ ५४५ ॥ वध्वा बुद्धया पराभूतो, देवदत्तस्तदाद्यपि । चिन्तया नष्ट निद्रोऽभू–द्वारिबद्ध इव द्विपः ॥ ५४६ ॥ तं योगिनमिवाऽनिद्रं, ज्ञात्वा च पृथिवीपतिः । वृत्तिं यथार्थितां दत्वा, चक्रे शुद्धान्त रक्षकम् ॥ ५४७ ॥ एका राज्ञी क्वचि द्रात्रौ, तमन्तः पुररक्षकम् । शेते नो वेति विज्ञातुं, निरैक्षिष्ट पुनः

पुनः ॥ ५४८ ॥ सोऽचिन्तयच्च किमपि, कारणं ज्ञायते नहि । तस्माय भूयो भूयोऽपि, मामेषा परिमीलते ॥ ५४९ ॥ सुप्ते च मयि किं कुर्या–दिति ज्ञातुं स पापिकः । अलीक निद्रया शिश्ये, सानुभूयोऽपि निर्ययौ ॥ ५५० ॥ सापि निर्भरसुप्तं तं, ज्ञात्वा हृदि सुपेशुषी । गवाक्षाभिमुखं गत्वा, मारेभे चौरवच्छनैः ॥ ५५१ ॥ गवाक्षस्य हि तस्याधो, भद्रोऽमुञ्चमयद्गमः । इभरो निर्भरगमा–नुभन्मेव सदस्थवः ॥ ५५२ ॥ सा तस्य हस्तिनो मेण्ठे, निस्सरत्नगवाक्षतः । सञ्चारितास्कन्धक, मपसार्य गृहे ययौ ॥ ५५३ ॥ तामाहत्य क्रोधेन मो ! नि-त्यास्यासस्युचितिस्थ । मुमोच भूमौ तां हस्ता, ऽऽघोरणः स चुकोपच ॥ ५५४ ॥ अतिकाले किमायासी, स्तुत्वा वाक्येसमः । हस्ति मुसलया राज्ञीं, दासीमिव जघान ताम् ॥ ५५५ ॥ सोवाच मा ताडयमा–मद्यान्तःपुर रक्षकः । राजा मुक्तो नमः का पि–जागरूकोऽभव-त्तमाम् ॥ ५५६ ॥ निद्रा क्षिप्रं कथमपि, माप्यतस्य चिरात्तरम् । आगतास्मीति विज्ञाय, माकोपीर्मयि सुन्दर ! ॥५५७॥ इत्थं च बोधितो हस्ति,–पकः कोपं विहायसः । रमयेस्म निराशङ्क, स्वया सह यथा रुचि ॥५५८॥ रात्रेस्तु पश्चिमे भागे, सा स्वास्थ शनिविशः । हस्तिना हस्तमारोप्यो–द्धृता स्वाश्रयं ययौ ॥५५९॥ दृष्टो च स्वर्णकारोऽपि, चरितं योषितो महो । अन्यासां ज्ञातकारात्म, मिव को चेतुमीश्वरः ॥ ५६० ॥ अहो असूर्यं पश्यानामपि यत्नामपोषिताम् । शीलभ्रष्टो मयस्येव, अन्यनारीषु का कथा ॥ ५६१ ॥ पानीयाहरणा यत्रे, सामा-न्यग्रहणोपेक्षिताम् । नगरे सञ्चरन्तीनां, शीलपालनमपि चिरम् ॥ ५६२ ॥ इति स्नुषाया दौःशील्या, मर्थं चिन्तां विहाय सः । सुष्वापस्वर्णकारो, पर्यङ्के स्वयं निर्भरम् ॥ ५६३ ॥ प्रभातेऽपि भवनागार, स्वपितः स्वर्णकारकः । चेटाम कथयामास–स्त्वं तथास्यं महीभुजे ॥ ५६४ ॥ राजापि ज्ञापयामासैवं, भाव्यं केनापि हेतुना । स यदा जागृयात्तर्हि, तदा नेयोऽस्मदन्तिके ॥ ५६५ ॥ इत्यादिष्टा यथुश्चेटाः, स्वर्णकारोऽपि निःशङ्क। निद्रा सुखं सप्तरात्रं, चिरान्द्रुतप्रसूतः ॥ ५६६ ॥ सप्तरात्रावसाने च, स नृपोपान्तमागतः । पृष्टे निद्रे गुरो राजा, चेष्टस्तुत्थ्यपत ॥ ५६७ ॥ निद्रा कापि तेनाग्ना–द्दुर्मनस्येव कामिनी । तत्किं सप्तरात्रं त्वं को हेतु बूहीस्त्वथ ॥ ५६८ ॥ सोऽपि तं रात्रिवृत्तान्तं, राज्ञा

हस्तिपकस्य च । हस्तिनश्च यथा दृष्टं, कथयामास भूभुजे ॥ ५६९ ॥ राज्ञा प्रसाद दत्वास, विसृष्टः स्वगृहं ययौ । जीर्णकुःल घ ५ बास्या,
स्वैर्यं ह्येति जनो जनात् ॥५७०॥ ताश्च दुश्चारिणीं राज्ञीं, परिज्ञातुमिलापतिः । कारयित्वा किलिञ्जेभं, राज्यः सर्वाः समादिशत् ॥५७१॥
स्वप्नो दृष्टो मया गत्त–कैलिञ्जोऽयं मतङ्गजः । आरोढव्यो विवस्त्राभि–र्भवतीभिः पुरो मम ॥ ५७२ ॥ चक्रिरेव तथा राज्यः–राज्ञः पश्यत
एव ताः । राज्ञी सैकात्वदोऽवादी–द्बिभेम्यस्मान्मत्तङ्गजात् ॥ ५७३ ॥ तां लीलोत्पलनालेन, सामर्षः प्राहरन्नृपः । मूर्छानाटितकं कृत्वा–
न्यपतत्सापिभूतले ॥ ५७४ ॥ नृपोऽपि बुद्ध्या निश्चिक्ये, सैवेयं कुलपांसिनी । पापीयसी दुराचारा, कथिता स्थविरेण या ॥ ५७५ ॥
निरूपयंश्च तत्पृष्ठं, शृंखलाघात दर्शनात् । नखाच्छोटनिका पूर्वं, कृत्वा स्मितमदोऽवदत् ॥ ५७६ ॥ क्रीडसीभेन मत्तेन, किलिञ्जेभाद्बि–
भेषि च । मोदसे शृंखलाघातान्मूर्छस्युत्पलघाततः ॥ ५७७ ॥ प्रदीप्तकोपप्राग्भारो, गत्वा वैभारपर्वते । राजाऽपि तं हस्तिपकं, हस्त्या–
रूढमजूहवत् ॥ ५७८ ॥ तद्द्वितीयां च तां राज्ञा, मारोपयदिभासने । आधोरणाधमं चोग्र, शासनस्तं समादिशत् ॥ ५७९ ॥ विषमाद्रि
प्रदेशाधि–रूढं कृत्वा मतङ्गजम् । पातयेः पतता तेन, युवयोरस्तु निग्रहः ॥ ५८० ॥ आधोरणस्तं करिण–मधिरोप्याद्रिमूर्धनि ।
त्रिपद्याधारयामासो–त्क्षिप्तैकचरणं स्थिरम् ॥ ५८१ ॥ हा हा कुर्वञ्जनोप्यूचे, यशोराज्ञा विधायिनः । मारणं करिरत्नस्य, राजरत्न
न युज्यते ॥ ५८२ ॥ अनाकर्णितकं कृत्वा, पातयत्येव वादिनि । नृपे द्विपं हस्तिपकः, पद्भ्यां द्वाभ्यामधारयत् ॥ ५८३ ॥ हहा
न वध्यो हस्तीति, पुनर्लोके प्रजल्पति । तूष्णीकोऽभून्नृपो मेण्ठो–ऽप्येकांह्रिस्थं गजं दधौ ॥ ५८४ ॥ मारणं हस्ति रत्नस्य, लोको
पृष्टुमनीश्वरः । हाहा कुर्वन्महीनाथं–जगादोदश्चितैर्भुजैः ॥ ५८५ ॥ उपवाह्यो ह्यसावन्य, गजासह्यः सुशिक्षितः । क्षिति वल्लभदुःप्रापो,
दक्षिणावर्त्तशङ्खवत् ॥ ५८६ ॥ प्रभुस्त्वमपराधीनो, यदिच्छसि करोचितम् । निरङ्कुशं स्यादयश–स्त्वविवेकभवं तव ॥ ५८७ ॥ कार्या–
कार्ये विचार्ये हि, हे स्वामिन्स्वामिना स्वयम् । स्वयंविचार्य तद्रक्ष, हस्तिरत्नं प्रसीदत ॥ ५८८ ॥ नृपोऽप्यवोचदस्त्वेवं, यूयं सर्वेऽपि

विचित्र वस्त्रालङ्कारा, लक्ष्मीरिव वपुष्मती । इयं हि गृहणी यस्य, ... ॥ ६१० ॥ पारशश्यादय चोर, इति हस्तिप-
कस्य ते । दोषमारोप्य विदधुः, सद्यः शूलाधिरोपणम् ॥ ६११ ॥ शूलाधिरोपितो मार्गे, यं यं यान्तं ददर्श सः । तं तं प्रोवाच दीनं मां,
वारि पायय पायय ॥ ६१२ ॥ तं च राजभयात्कोऽपि, न पानीय मपपायत् । सर्वोऽपि कुरुते धर्म, मात्मरक्षा पुरस्सरम् ॥ ६१३ ॥ श्रावको
जिनदासाख्य, स्तेन तेनाध्वना व्रजन् । दृष्टश्च याचितश्चाम्भः, सोऽपि चैवमुवाच तम् ॥६१४॥ उदन्यां ते हरिष्यामि, कुरुष्वेकं तु मद्वचः।
घोषेर्नमोऽर्हद्भ्यइति, यावद्वार्यानयाम्यहम् ॥ ६१५ ॥ मेण्ठोऽपि तद्घोषयितुं, प्रारेभेऽम्भः पिपासया । श्रावकोऽप्यानयन्नीरं, राजपुंसामनु-
ज्ञया ॥ ६१६ ॥ आनीयमानं दृष्ट्वाम्बु, समाश्वस्य निषाद्यपि । नमोऽर्हद्भ्य इति भृशं, पठन्प्राणैरमुच्यत ॥ ६१७ ॥ सत्वसश्रुतशीलोऽपि,
शीलिता कामनिर्जरः । नमस्कारप्रभावेण, बभूव व्यन्तरामरः ॥ ६१८ ॥ प्रतस्थे पुंश्चली साऽपि, चौरेण सह वर्त्मनि । आससाद नदीमे
कां, वारिपूरेण दुस्तराम् ॥ ६१९ ॥ चौरोऽपि पुंश्चलीमूचे, प्रिये त्वामेकवेलया । नोत्तारयितुमीशोऽस्मि, वस्त्राभरणभारिणीम् ॥ ६२० ॥
वस्त्राभरणसम्भारं, त्वं ममार्पय वर्णिनि । तमादौ परतो नेष्ये, ततस्त्वामपि लीलया ॥६२१॥ यावदायाम्यहं ताव–च्छरस्त म्बेस्थिरा भव ।
एकाकिन्यपि मा भैषी, रेष्यामि न चिरेण हि ॥६२२॥ आरोप्य पृष्टदेशे त्वां, तरन् पोत इवाम्भसि । तटे परस्मिन्नेष्यामि, माभैषीः कुरु म
द्वचः ॥ ६५३ ॥ पुंश्चल्यपि तथा चक्रे, शरस्तम्बे प्रविश्य च । वस्त्राभरणभृत्सोऽपि, पारं गत्वेत्यचिंतयत् ॥ ६२४ ॥ भर्त्तारं मारयामास,
येयं मय्यनुरागिणी । क्षणरागा हरिद्रेव, विपदे स्यान्ममाप्यसौ ॥ ६२५ ॥ इत्युपादाय तद्वस्त्रा–भरणानि स तस्करः । तां वलत्कन्धरः
पश्य, भ्रश्यति स्म कुरङ्गवत् ॥ ६२६ ॥ करिणीवोद्धतकरा, यथाजातेव नग्निका । ऊचे तं यान्तमालोक्य, मां विहाय प्रयासि किम्
॥ ६२७ ॥ चौरोऽब्रवीद्विवसना–मेकांशरवणस्थिताम् । राक्षसीमिव दृष्ट्वा तां, विभेम्येव कृतं त्वया ॥ ६२८ ॥ एवं वदन् खग इवो, ड्डीनः
सोऽगाद दर्शनम् । तत्रैव तस्थौत्वासित्वा, धर्षणी पतिघर्षणी ॥ ६२९ ॥ स हस्तिपकजीवोऽपि, देवभूयमुपेयिवान् । प्रयुक्तावधिरद्राक्षी,

घो तयास्यां तपस्विनीम् ॥ ६३० ॥ सम्मुखोपस्थितस्तां तु, प्राग् जन्म ग्रहमेष्ठिनीम् । मुखाग्रमांसपेशीकं शृगालं विचकार सः ॥ ६३१ ॥ इतश्च सरितस्तस्या, स्तीरे नीरादहिः स्थितम् । मीनं मोक्तुमपाविष्ट, मांसपेशीं विहाय सः ॥ ६३२ ॥ तदा मीन पुनरपि, प्रविवेश नदीजलम् । उपादत्ते वमिकृत्य, शकुन्या मांस पेश्यपि ॥ ६३३ ॥ नदीतीरे तत्क्षणे, निषण्णा सा तु नग्निका । जगाददुःस्त्वीनापि, जम्बुकं दृष्टकौतुका ॥ ६३४ ॥ मांसपेशीं परित्यज्य, मीनमिच्छसि दुर्मते ! । भ्रष्टो मीनाच्च मांसाच्च, किं जम्बुक ! निरीक्षसे ॥ ६३५ ॥ केस्त्र स्वाद्योभर्तारं, हित्वोपपतिमिच्छसि । भ्रष्टा मत्युश्च जाराच्च, नग्निके किं निरीक्षसे ॥ ६३६ ॥ तच्छ्रुत्वा सुष्ठु विस्मयस्या, स्वस्या स प्यन्तरापरः । पार्श्विके निजं रूपं, दर्शयित्येवमब्रवीत् ॥ ६३७ ॥ पापमेवाकृथाः पापे ! यद्यपि त्वं तथापि हि । जिनधर्मं प्रपद्येथाः, पापपङ्कनष्टये ॥ ६३८ ॥ मुग्धे ! हस्तिपकः सोऽहं, यस्त्वया मृत्युमापितः । जिनधर्मप्रभावाच्च, देव भूतोऽस्मि पश्य माम् ॥ ६३९ ॥ जिनधर्मं प्रपत्स्येऽस्म्यपीविकृत्य निश्चयाम् । तां साध्वी समिपौनीत्वा, स प्रव्रज्यामनिग्रहत् ॥ ६४० ॥

इति नूपुरपण्डिता कथानकं ॥ तथैवान्यमपि ग्रन्थेषु मोक्षमस्तीति । तथा सुदर्शनश्रेष्ठिकथानके प्राग्भवे तज्जीवस्य सुभगाख्यमहिषीपालस्य श्रीमर्हद्दासश्रेष्ठिना नमस्कारादि शिक्षणमनुचित स्यात् । तत्कथानकं चेदं ॥ चम्पानगर्यामर्हद्दासनामा जैनधर्मासक्तहरिणापणीः श्रेष्ठि वसति स्म । तस्याऽर्हद्दासी नाम्नी वनिता, साऽपि जिनोक्तधर्माराधका, शीलालङ्कार धारिणी, तस्य श्रेष्ठिन सुभगाख्यगोपालः । अथैकदा सौरमेयीश्चारयित्वा, सन्ध्यासमये धेनूर्लात्वा, स्वग्रामं प्रति समागच्छन् सुभगो मार्गे महारम्भेणाऽनाच्छादितशरीरत्वात्कम्पायमानमेकं कायोत्सर्गेस्थितं तपस्विनमद्राक्षीत्, निरीक्ष्य तन्मुनेस्तपविषये मधुरस्वरसा तथा स्तुतिं विधाय, निजगृहे सुभगः समाययौ । स्वगृहे रात्रिं स्थित्वा द्वितीयदिने, अनुदिते सूर्ये सूर्योदयात्पूर्वमेव स्वकीयार्हद्दासश्रेष्ठिनो गावाः रयितुं साधुपरिचितेन तेनैव मार्गेण गोपालः प्रयातः, तत्समयेऽपि तथैव कायोत्सर्गेण स्थितं तमेव तं मुनिं निरीक्ष्य, अहो ! यस्या महा-

पेन पाणिनः प्राणरहिता भवन्ति, तादृश्याः शीततायाः समयेऽप्ययं मुनिः सम्पूर्णरात्रि यावदत्रैव कायोत्सर्गेण स्थितः एतत्तु महच्चित्र मित्युक्त्वा सुभगो मुनिपार्श्वे समागत्योपविष्टः। अत्रान्तरे सूर्योऽभ्युदित स्तदा "नमो अरिहंताण" मित्युक्त्वा समुत्पत्याकाशमार्गेण प्रययौ। ततः सुभगेन विचारितं, यत् "नमो अरिहंताणम्" इति पदोच्चारणमात्रेणैवायं मुनिराकाशमार्गेण समुत्पत्य यदागतस्तदा तु गगनगमनकरणे तन्मुनिपार्श्वेऽयमेव मंत्रः समस्ति, ततो मयाऽप्येतन्मन्त्रस्यैव ध्यानं विधेयम्, एवं विचार्य तद्दिनादारभ्य तस्यैव मन्त्रस्य निजहृदये ध्यानं धर्त्तुं लग्नः। अथैकदा तत्पदस्य ध्यानं धृत्वा तत्रोपविष्टं सुभगं दृष्ट्वा श्रेष्ठिना पृष्टः भो सुभग! एतत् किं जपसि? तथाऽयं मंत्रस्तव केन प्रदत्तः? तेनापि मुनिना दत्तः, इत्युक्त्वा सर्वाऽपि वार्त्ता श्रेष्ठिने प्रोक्ता, तदा श्रेष्ठ्यप्यानन्देन सम्पूर्णनमस्कारमंत्रमपाठयत्, तस्य तत्प्रभृति सम्पूर्णनमस्कारस्य ध्यानं विधातुं लग्नः। अत्रान्तरे चतुर्मास्यं समागतम् अन्यदा! वर्षासु बहुवृष्टिर्जाता, पृथ्व्यपि जलमयी बभूव, तत्समये गाश्चारयितुं वन गतस्तद्गमनान्तरं बहु मेघवृष्टिरजनि, अन्तराले नदीपूरमागतं, ततः सुभगो निजग्रामगमने सर्वथाऽसमर्थो जातः, तदा नमस्कारं स्मृत्वाऽऽकाशोत्पतन बुद्ध्या नद्यां झम्पा दत्ता, परमन्तराले कीलकोपरिपतितः, तत्कीलकघातात् सुभगस्तत्कालं मृत्वा नमस्कारप्रभावेण तस्यैवार्हद्दासश्रेष्ठिनो गृहे पुत्रत्वेन समुत्पन्नः, सुदर्शन इति तस्य नाम दत्तं, अनुक्रमेण सर्वकलाकलापं पठित्वा कलाविदग्रेसरो बभूव, योवनवयसि प्राप्ते पित्रा मनोरमा नाम्नी कस्यचित् श्रेष्ठिनः कन्या परिणायिता, क्रमेण सर्वश्रेष्ठिमान्यो विशुद्धशीलव्रतधारी सुदर्शनश्रेष्ठी जातः। इत्यादि सुभगोदाहरणम् ॥ तथा सम्यक्त्वकौमुद्यादि ग्रन्थेष्वपि रूप्यखुरचौरस्य तथाविधविवेकविकलस्य नमस्कारपाठनं देवत्वहेतुः, तर्हि कथं तस्य महानिशीथसूत्रोक्ताऽनन्त संसारिता न भवेत्? इति राकारक्तस्याऽभिप्रायः। अथात्रोत्तरं यथा भो! भो! त्वया एतेन वाक्येन निजमूर्खत्वं प्रकटितं, यतो मुख्यवृत्तिस्तावत्स्वभावतः प्रवृत्तिरुत्सर्गरूपा, उत्सर्गस्त्वपवाद घटित एव स्यात्! यदुक्तं व्यवहारभाष्ये–गाथा॥ जावइआउस्सग्गा, तावइआ चेव हुंति अववाया। जावइआ अववाया, उस्सग्गा तत्तिआ चेव ॥१॥ इति तथा

वदनर्थ एव । अत्र शङ्कां कुर्वन् राकारक्तः प्राह–शरमहतशकुनिका, श्रीपार्श्वनाथजीवो हस्ती, श्रीमुनिसुव्रतस्वामिप्राप्तेऽश्वः, श्रेष्ठिसुतो मत्स्यश्चेत्यादीनामुपधानविकलानां कथं नमस्कारस्य श्रावणम् ? इति चेदुच्यते यस्तु कश्चिदुपधानद्विदेवमालपति, तच्च महदज्ञानमेव, यतः श्रावणं नागमे निषिद्धं, किन्तु तदध्ययनाध्यापन निषिद्धमिति । कथमन्यथा कालिकश्रुतमप्याचाराङ्गादि श्रावकेभ्यः श्राव्यते ? इत्यादि स्वयमेव पर्यालोच्यमिति । पुनर्निजपक्षमाविष्कुर्वन् राकापक्षकक्षीकारः समाचचक्षे–ननूपधानव्रताऽभावेऽपि कथं शुद्धिर्भवतीति चेदुच्यते तथा विधसामग्र्याः तपः करणशक्ति गुर्वादिलक्षणायाः अभावात् कस्यचित् न पुनः सर्वस्यापि शुद्धभावतः उपधानवहनाभिमुखस्य शुद्धिर्या वर्त्तते सा आलोचनाविधिवत् यथा आलोचना जिघृक्षुः शुद्धपरिणामो गुर्वादि सामग्र्यभावे तदभिमुखोऽनालोचितपातकोऽपि शुद्धो भवति, तथाऽयमपि । तथा हीरप्रश्नग्रन्थेऽप्युक्तं–गुर्वभावे दक्षश्राद्धेन स्थापना गुरुसमीपेऽपि सर्वोपधानविधिः कार्यः, परमालस्यादिकं न कार्यमित्यादि । परं नायं प्रकारः सर्वत्र प्रमाणं, कथञ्चित् कादाचित्कत्वात्, नहि मरुदेवी मातृ सिद्धमपेक्ष्य द्रव्यचारित्रग्रहणे निरादरता युक्ता।। इति कथमिति चेदुच्यते द्रव्यचारित्रग्रहणाभावे तु केवलज्ञान्यपि द्रव्यवन्दनया न वन्द्यते, यदुक्तं श्रीहेमचन्द्रसूरिभिः त्रिषष्टि शलाकापुरुषचरित्रान्तर्गतश्रीआदीश्वरचरित्रे षष्ठसर्गे प्रान्तभागे–"सहसासनकंपोऽभूत्तदानीं च दिवस्पतेः। महद्भ्यो महतामृद्धि, मपि शसन्त्य चेतनाः ॥१॥" भक्त्यातमभ्यगाचेन्द्रो, भक्ता हि प्रतिपत्तिदाः। स्वामिवत्स्वामिपुत्रेऽपि, किं पुनः प्राप्तकेवले ॥२॥ शक्रोऽभ्यधात् द्रव्यलिङ्गं, प्रतिपद्य स्वकेवलिन्। यथा वन्दे विदधे च, तव निष्क्रमणोत्सवम् ॥३॥ ततश्च बाहुबलिव–द्विदधे भरतेश्वरः। प्रव्रज्यालक्षणं केशो–त्पाटन पंचमुष्टिकम् ॥४॥ उपनीतं यथा सन्नि–हित देवतया ततः । रजोहरणमुख्योप–करणं भरतोऽग्रहीत् ॥५॥ ववन्दे देवराजेन ततश्च भरतेश्वरः। न जातु वन्द्यते प्राप्त, केवलोऽपि ह्यदीक्षितः ॥६॥ नृपा दशसहस्राणि, प्राव्रजन्नार्षभि श्रिताः । तादृशस्वामि सेवा हि, परत्रापि सुखाकरी ॥ ७ ॥ इत्यादि वाक्येन द्रव्यचारित्रहीनः केवलज्ञान्यपि न वन्द्यते इति । तेन कादाचित्कं कार्यं सर्वत्र न प्रमाणमिति । ततः उपधानमन्तरेणापि

शुलिकाप्रोक्तमेवपुष्पादीनां देवत्वहेतु, तेन कारणेन श्रावकाणामनुपधानेनापि क्रिया शुद्धयतीति विचारणा महापाप–हेतु रिति। शुद्ध श्राव केस्तूपधानमतं विधायाऽऽवश्यक सूत्रादिकं पठनीयमिति विचारणीयं, तद्विचारणा महापुण्यहेतुरिति उपधानव्रतेन श्रावकाणामावश्यक शुद्धय तीति जिनैः प्रोक्तत्वात् । तथा श्रीउत्तराध्ययनसूत्रे च उपधानतपः प्रोक्तं, तथा च तत्पाठः, गाथा ॥ तवोवहाणमादाय, पडिमं पडिव ज्जमो । एवंपि विहरओमे, छउमं न नियट्टइ ॥ १ ॥ इति एतद्गाथा व्याख्यायां यदुक्तं श्रीवादिवेतालशान्तिसूरिभिः–तपश्चरयेकस्तेनो–यथा तपो महामहाप्रत्युपधानमागमोपचाररूपमाचाम्ला यादाय स्वीकृत्य चरित्वेति। यावदि त्यादि। इति श्रीउत्तराध्ययनसूत्र वृहद्वृत्तौ। तथा प्रोक्तं निशीथभाष्येऽपि–काले विणए बहुमाणे, उव हाणे तह य निन्हवणे । वंजण अत्थ तदुभए, अट्ठविहो णाणमायारो ॥ १ ॥ इति सार गाथायां चतुर्थसारमाथा । यथा–दुग्गतिपडणुधरणा, उवहाण जत्थ जस्स जं सुत्ते। आगाढमणागाढे, गुरुलहुआणा दसग पडिमा ॥१॥ इति श्रीनिशीथ भाष्यं, तच्चुर्णियथा–"इयाणि उवहाणत्ति दारं, तं दव्वाभावय । दव्वे उवहाणगादिमाणे, इमं दुग्गति गाहा दुट्ठागती दुग्गतो दुग्गं वा नसिविग्गहसि गतीए य दुग्गती विषमेत्यर्थः । कुत्सिता वा गति र्दुर्गतिः । अणभिक्खसयत्थे दुसद्दोजह–दुम्मगो साण रगगति । तिरिय गती वा पपयं पात", तीए दुग्गतीए पडंत मप्पाणं जे धरेति, तं उवहाणं भण्णति, तं च जत्थंति एस सुत्तविउग्गा, जत्थ उद्देसगे, जस्स अज्झयणे, जस्स सुयक्खंधे, जत्थ अंगे, कालुक्कालिय, अंगीणंगेसु, नेआ । जमिति जं उवहाणं णिव्वति, तावित तस्स तत्थ सुत्ते श्रुते कायव्वमिति । यत्कमे सम्मवति आगाढाणागाढेति, जं च उद्देसगादि सुत्तं भणितं, तं सव्वं समासओ दुविहं भण्णति, आगाढमणागाढ या, त आगाढसुयं भगवई दुआई अणागाढमायारं गाई, इत्यादि श्रीनिशीथसूत्रचूर्णौ, तथा पञ्चवस्तुकसूत्रेऽपि यदुक्तं गाथा । उव हाणं पुण आयं–बिलाइ जं जस्स वण्णियं सुत्ते। तं तेणेव य देयं, इहरा आणाइया दोसा ॥ १ ॥ अस्या गाथायास्तद्विवरणं–उपधानं पुन राचाम्लादि यद्यस्याध्ययनादेर्वर्णितं सूत्र यथागमे तदध्ययनादितेनैव तु देयं, इतरथा अन्यथा दाने आज्ञादयो दोषा इति भावार्थः । इति

श्रीहरिभद्रसूरिकृतवृत्तौ । तथा एवं दशवैकालिकनिर्युक्तावपि " काले विणए बहुमाणे उवहाणेत्यादि " न चैतत्साधूनामेवोक्तमिति वाच्यं, श्रुताराधनतपो विशेषस्य यथा सम्भवं यथा ज्ञात्वोभयोरपि सम्मतत्वात् । सामायिकादिषडध्ययनात्मकस्य श्रीआवश्यकश्रुतस्कन्धस्याध्ययनमधिकृत्य द्वयोरप्यधिकारादेकस्य श्रुताराधनतपो विशेषो युक्तो नेतरस्येति वक्तुं नहि शक्यते, तस्मात् श्रुतस्कन्धस्य तदध्ययनानां वाऽऽराधनं निशीथचूर्ण्यादिषु साधूद्दिश्योक्तमप्युपलक्षणात् तदनुयायिनः श्रावकस्यापि यथार्हं युक्तमेव, यथा "कालेण निक्खमे भिक्खू" इत्यादावनुक्ताऽपि साध्वी साध्वनुयायित्वात् परिगृह्यते, अन्यथा कालादिरष्टविधो ज्ञानाचारः साधूनामेव सम्पद्यते, न पुनः श्रावकाणामपि, न चेदमेवास्तामिति वाच्यं, साधूनामष्टविधो ज्ञानाचारः श्रावकाणां चोपधानवर्जः सप्तधेति क्वाऽप्यऽऽगमे विविच्य व्यक्तमनुपलम्भात्, परं देशविरति सर्वविरत्योराराधनतपोविधौ, भेदा यथा " सामाइअंमिउकए समणो इव सावओ हवइ जम्हा " इत्यत्र साम्येऽपि न सर्वथा साम्यं किन्तु देशेन तद्वशाच्च तदुद्दिश्य कृतमप्यन्नादिकं श्रावको भुङ्क्ते न पुनः साधुरेव मन्योपि भूयान् भेदः । एवं साधूनां श्रीआवश्यकश्रुतस्कन्धस्याष्टदिनात्मको योगः श्रावकाणां तु श्रीमहानिशीथसूत्रोक्तो विधि उपधानसंज्ञितः, यद्यप्युपधानशब्देन सामान्यतः श्रुताराधनतपो विशेषो भण्यते, तथापि विविच्यमानो मुनीनां योगोऽपरपर्यायमुपधानं, श्रावकाणां तु पर्यायविमुक्त मेवोपधानमिति वोध्यं । पुनरत्र शङ्कां कुर्वन् राकारक्तः प्राह–नन्वेवमाराधनविधिभेदः कथमिति चेदुच्यते–जिनाज्ञाया अर्चनीयत्वात्, किं चोद्दिष्ट भोजित्वे नारम्भे परिग्रहवतां कश्चिद्भेदो वक्तव्यः स च पर्यालोच्यमानोऽयमेव दृश्यते, लोकेऽपि समानरोगोपशान्तावपि कालपुरुषवयः प्रत्यु‍ेक्षणया औषधादि पथ्यविधौ भेदः, परं पथ्य तूभयोरपि देयमेव । किं चैक एवाराध्यो भिन्नभिन्नाराधकापेक्षया भिन्नस्वभावेनैवं परिणमति, यतो विद्यमानोऽर्हन् साध्वानीतमाहारमेव भुञ्जानः साधुमपेक्ष्याऽऽहारोपभोक्तृतया परिणतः पुजास्वादकतया तु देवादिकमपक्ष्यैव, एवं प्रतिमापि बोध्याः, नहि येनैव विधिना साधुना प्रतिमा आराध्यते, तेनैव विधिना श्रावकेणापीति। प्रवचनमर्यादाभङ्गापत्ते रित्यलं विस्तरेणेति । अत्र

पुनः कश्चित् शङ्कां कुर्वन्नाह—अन्यच्चोपधानमालारोपणयोः किं फलमुद्दिश्य कर्तव्यतेति चेदुच्यते—यदुक्तं श्रीहीरप्रश्न ग्रन्थे "अन्यच्चोपधान मालारोपणयोः किं फलमुद्दिश्य कर्तव्यता ? यत्र च साऽभिहिता, तदपि शास्त्रं व्यक्त्या प्रसाद्यमिति" अथैतत्प्रश्नस्य प्रतिवचनं—यथा तथोपधानमालारोपणयोः किं फलमुद्दिश्य कर्तव्यता यत्र च साऽभिहिताऽस्तीत्यत्रोपधानवहनं श्रुताराधननिमित्तं, मालारोपणं तु तपस उद्यापनार्थं श्रीमहानिशीथादिशास्त्रे प्रोक्तमस्तीति। पुनः पूर्णिमापक्षकक्षीकर्ता प्रश्नमाह—ननु श्रीआवश्यकस्याध्ययनमपि श्रावकाणामुप धानवहनपुरःसरमस्ति, तर्हि कथंचित् श्रावकाऽपि चतुःशरण प्रकीर्णकादीनि पठन्ति, प्रकीर्णकानि त्वागममध्ये गण्यन्ते, तस्मात् प्रकी र्णकान्यपि योगवहनपुरःसरं साधूनां पठनं युक्तमेव। श्रावकाणामागमवाचननिषिद्धत्वात् कथं श्रावका अपि चतुःशरणप्रकीर्णकादीनि पठन्ति ? अत्रोत्तरमाह—भो भो ! इत्येतदपि प्रलापमात्रं, तत्पठने तु श्रावकाणामधिकारः परम्परया, यदुक्तं हीरप्रश्ने जगमालगणिकृत प्रश्नाधिकारे—ननु चतुःशरणप्रमुखानां कियतां प्रकीर्णकानां पठने श्राद्धोऽधिकारीति ? अस्य प्रतिवचनं, यथा—परम्परया भक्तपरिज्ञा प्रकी र्णक १, चतुःशरण २, आतुरप्रत्याख्यान ३, संस्तारकप्रकीर्णक ४, नामध्ययने, श्राद्धानामधिकारित्वमवसीयते, इति, तान्यपि पुनः पर म्परयाऽऽचाम्लत्रयकरणपुरस्सरं श्रावकैः पठ्यन्ते, इत्यादि बहुषु जैनसिद्धान्तेषु साक्षादुपधानविधिः श्रावकाणां प्रोक्तः, स्वमवगम्य पुनरपि शङ्कां कुर्वन् ढुंढकमती आह—ननु श्रीउपधानविधेरविधाने श्रावकाणां को दोषः ? तथा तदुपधानतपः, पूर्वं केनापि समाराधितमस्ति ? इति चेदुच्यते, भो ढुंढक ! यद्येवं तर्हि शृणु प्रवचनोल्लासकारिणि श्रीमहानिशीथसूत्रेऽनुपधानकुशीलस्य महान् दोषः, तथोपधानव्रते दृष्टान्तभा वना, यथा ये श्रावका उपधानव्रतं न स्वीकुर्वते, ते कपर्दकवत् दुःखं प्राप्नुवन्ति, तथा ये उपधानव्रतं शुद्धितः स्वीकुर्वते, तेऽजितदेववत् सौख्यभाजो भवन्ति। अत्रोपधानविषये कपर्दकाजितदेवयोर्द्वयोरपि सहोदरयोराख्यानकं। यथा—चम्पापुरि परमार्हतजिनदासश्रेष्ठिन स्तनयौ द्वौ कपर्दकाजितदेवाख्यौ, पित्राशिक्षितेऽपि नमस्कारादिसूत्र पाठकारितौ यावत् पौषधतपो योग्यौ जातौ, तावत्पित्रोक्तं

वत्सौ सम्यक् सूत्राराधनार्थमुपधानतपो विधत्तां चित्तैकाग्र्येण। यतः—विहि सारं चिअसेवइ, सद्धालू सत्तिमं अणुट्ठाणं। दव्वाइ दोस निहओ, विपक्खवायं वहइ तंमि ॥१॥ आसन्न सिद्धिआणं, विहिपरिणामो उ होइ सयकालं। विहिचाउ अविहिभत्ती, अभव्वजिअदूरभव्वाणं ॥२॥ एतद्गाथा शब्दार्थो—यथा—विधिसारं एव सेवते श्रद्धालुः शक्तिमान् अनुष्ठानं, द्रव्यादिदोषनिहतः अपि पक्षपातं वहति तस्मिन् १। आसन्नसिद्धिकानां विधिपरिणामस्तु भवति सदाकालं, विधित्यागः, अविधिभक्तिः, अभव्यजीवदूरभव्यानामिति २। तदाकर्ण्य सकर्णाग्रणीर्लघुरप्यलघुधीरिष्टं वैद्योपदिष्टं चेति मन्वानः सानन्दं नन्दिमहोत्सवादि विधापनपूर्वमपूर्वबहुमानगर्भमुपधानतपांसि मुख्यविधिनैवोद्वहति स्म। वृद्धस्तु सांसारिकरसगृद्धः पोषधोपवासादिक्रिया दौष्कर्यमानी समानीत निर्ह्रीकतादिसाहसः सूत्राणि तु प्रागप्यस्खलितान्यधीतानि, मुधा किमतः परं दुस्तपतपस्तपनादि क्लेशावेशाश्रयणेन ? यतः "अतिक्लेशेन ये त्वर्था—ऽधर्मस्याति क्रमेण च। शत्रूणां प्रणिपातेन, ते ह्यर्थामाभवन्तु मे" ॥ १ ॥ एवमुपधानावधीरणाधुरीणः १ प्रवीण मातापितृभ्रात्रादिभिर्बहु बहुप्रेरणेऽपि, गलीबलीवर्द इव धुर्यभारं कथमपि नोपधानं वहति स्म, धिग्धिग्धर्मिष्ठानामपि प्रमादमदिरामेदुरमदोद्रेकावेशविसंस्थूलत्वं, यत्सम्यग्धर्मविधि विदग्धा अपि, वह्निदग्धा इव नोत्तिष्ठन्ते तदाराधनार्थं। एवं तेनोपधानानुद्वहनेन किञ्चित्तदवहीलनादिना ज्ञानावरणीयकर्म श्राद्धधर्माराधनेऽपि तीव्रं बद्धं, द्वावपि च श्राद्धधर्माराधनेन सौधर्मे सुपर्वीभूयमनुभूय, तत श्च्युतौ महाविदेहे महेभ्य कुलेऽवतीर्णवन्तौ यमलजातौ सुतौ देवदत्त—गुरुदत्तनामानौ, परं प्राक्तनस्य कर्मदोषेणातिमूर्खत्वनिर्बुद्धित्वादि जज्ञे। द्वितीयस्य चातिप्राज्ञत्वसुबुद्धित्वादि क्रमाद्द्वावपि पित्राध्यापयितुमध्यापकस्यार्पितौ, आद्यस्य बहुपक्रमेऽपि वर्णमात्रमपि न हृदि तिष्ठत्युदकविन्दुरिवातितप्तपात्रे, किं बहुना, वर्णानां वाचन लिखनाद्यपि काष्ठपुत्रक इव लेशतोऽपि नाज्ञासीत्, पित्रादिभिर्विविधौषधमन्त्रतन्त्रयन्त्रदैवतप्रश्नाद्यनेकोपायकरणेऽप्यहर्निशं पाठनेऽपि च नमस्कारपदमात्रमपि नापाठीच्च; द्वितीयस्तु हार्दपरिज्ञानेन बृहस्पतिरिव स्वल्पैरेव दिवसैः सुखेनैव सकलशास्त्राब्धिपारीणतया सर्वान्तर्वाणि शिरोमणिभाव

धानाराधनाऽनाराधनयोः फलमाकलय्य, प्रमादमवगण्य तदाराधनविधौ सम्यगुद्यममितिश्राद्धोपधानविषये ज्ञातम् । एवं विभाव्य भव्य प्राणिभिरुपधानव्रतपुरस्सरमावश्यकमपि पठनीयमिति बहुषु जैनसिद्धान्तेषु यदि प्रोक्तं, तर्हि अन्यागमवाचनस्य तु का कथा ? शुद्धजिनाज्ञा परिपालकास्तु श्रीउपधानव्रतपुरस्सरमेव श्रीआवश्यकं पूर्वोक्तप्रकीर्णकचतुष्कं च पठन्ति, नान्यथा, अन्येषामागमानामङ्गोपाङ्गादीनां समूहं नहि शुद्धश्राद्धा वाचयन्ति, जैनागमेषु श्रावकाणामागमवाचननिषिद्धत्वात्, इति विशेषार्थः ॥ इति श्रीमत्पन्न्यासदयाविमजित्सुशिष्यपन्न्यास श्रीसौभाग्यविमलजिद्विनेयमुक्तिविमलेन विरचितायां स्वोपज्ञाऽऽगमवाचन मीमांसावृत्तौ श्रीअष्टमकाव्यार्थः ॥ ८ ॥

श्राद्धाः सूत्रकपाठका गुणयुता नोक्ताश्चकुत्राऽपि वै,
लद्धट्ठेत्ति सुपञ्चमाङ्गवचनात्तेऽर्थ व्रजग्राहकाः ।
पूर्वं ज्ञानमनुप्रकृष्टकरुणा पाठोऽपि सौत्रः स तु,
साधूनां पठनाय सम्प्रगदितो न श्रावकाणां पुनः ॥ ९ ॥

अथ श्रीनवमकाव्यव्याख्यामाह । अत्र नवमकाव्ये क्वापि सिद्धान्ते श्रावका आगमपठितारो न प्रोक्ता, इति दर्शयन्नाह:—श्राद्धाः सूत्रकपाठका इत्यादि, चकारः पुनरर्थे, वै निश्चये, कुत्राऽपि सिद्धान्ते गुणयुताः श्रावकगुणयुक्ता श्राद्धाः श्रावका सूत्रकपाटकाः सूत्राणामागमानामध्येतारः नोक्ताः न प्रोक्ताः, "श्रावकैरागमाः पठनीया वाचनीया वा" इति क्वापि सूत्रे न प्रोक्तमित्यर्थः । लद्धट्ठा इति सुपञ्चमाङ्गवचनात् लद्धट्ठागहियट्ठा इत्यादि सुपञ्चामाङ्गस्य शोभनभगवतीसूत्रस्य वचनात् श्रावका अर्थव्रजस्य अर्थसमूहस्य ग्राहकाः गृहितारः न तु सूत्रपाठकग्राहकाः, पूर्वं प्रथमं ज्ञानं, अनु पश्चात्, प्रकृष्टा श्रेष्ठाकरुणादया "पढमं नाणं तओदया" इति सौत्र श्रीदशवैकालिकसूत्रसत्कः

पाठोऽपि च स पञ्चसु साधूनां पठनाय साधूनामध्ययनाय सम्यग्दृशः सम्प्रोक्तः, न पुनः श्रावकाणां पठनाय, श्रावकाणां दशवैकालिकसूत्रपठनेऽनधिकारित्वादिति काव्यसम्बन्धार्थः ॥ ९ ॥ विशेषार्थस्त्वयं—श्रीभगवतीसूत्रे द्वितीयशतके पञ्चमोद्देशकेऽपि तुङ्गिकानगरीवासिश्रावकवर्णनाधिकारे, श्रावका अर्थे ग्राहकाः प्रोक्ता, न तु सूत्रपाठग्राहकाः, तथा च तत्पाठः । "निग्गंथे पावयणे निस्संकिया निक्कंखिया निव्वितिगिच्छा लद्धट्ठा गहियट्ठा पुच्छियट्ठा अभिगयट्ठा विणिच्छियट्ठा अट्ठिमिंजपेम्माणुरायरत्ता" इत्यादि तथैतत्पाठविशेषे यदुक्तं श्रीअभयदेवसूरिभिस्तत्पाठो यथाः—लद्धट्ठत्ति अर्थं श्रवणात्, गहियट्ठत्ति अर्थावधारणात्, पुच्छियट्ठत्ति सांशयिकार्थप्रश्नकरणात्, अभिगयट्ठत्ति अभिगतार्थस्याभिगमात्, विणिच्छियट्ठत्ति ऐदं पर्यार्थस्योपलम्भात्, अत एव अट्ठिमिंजपेमाणुरागरत्ता अस्थीनि च कीकसानि मिंजा च तन्मध्यवर्ति धातुरस्थिमिंजास्ताः प्रेमानुरागेण सार्वज्ञप्रवचनप्रीतिलक्षणकुसुम्भादिरागेण रक्ता इव रक्ता येषां ते तथा, अथवाऽस्थिमिंजासु जिनशासनगतप्रेमानुरागेण रक्ता ये ते तथा । इति श्रीभगवति, सूत्रवचनात् श्रावका अर्थग्राहका एव प्रोक्ता, न तु क्वापि "लद्धसुत्ता गहियसुत्ता" इति प्रोक्ताः । सूत्रे तु साधूनामपि क्रियद्दीक्षापर्यायातिक्रान्तेन सूत्रपठनं प्रोक्तं, तथा च पञ्चवस्तुकग्रन्थे श्रीहरिभद्रसूरिभिः प्रोक्तं तथाच तत्पाठः—गाथा ॥

आसक्खेण पयं, संवच्छरमाइणाओ मे भंमि । तं ठंमि चेव धीरो, वा पज्जासोय कालोयं ॥ ५८१ ॥ तिवरिसपरियागस्सउ, आयारपकप्पनाम अज्झयणं । चउवरिसस्सउ सम्मं, सूयगडं नाम अज्झयणं ॥ ५८२ ॥ दसकप्पववहारो, संवच्छरपणगदिक्खियस्सेव । ठाणं समवाउ समवाउ, चियअंगे अट्ठवासस्स ॥ ५८३ ॥ दसवासस्स विवाहा, एक्कारस वासयस्स अइमे । खुड्डियविमाणमाई, अज्झयणा पंचनायव्वा ॥ ५८४ ॥ बारसवासस्स तहा, अरुणुववायाइ पंच अज्झयणा । तेरसवासस्स तहा उट्ठाण सुयाइ चउरो ॥ ५८५ ॥ चोद्दसवासस्स तहा, आसीविसभावणं जिणा बिंति । पन्नरस वासगस्स य, दिट्ठीविसभावणं तहय ॥ ५८६ ॥ सोलसवासाई सुय, एक्क

खुड्डिएसु जह संखं । चारणभावणमहसु, विणभावणा तेयगनिस्सग्गा ॥ ५८७ ॥ एगूण वसगस्सउं, दिट्ठीवाओ दुवालसमंगं । संपण्ण वीसवरिसो, अणुवाई सव्वसुत्तस्स ॥ ५८८ ॥ उवाहणं पुण आयं–विलाइं जंजस्स वन्नियं सुत्ते । तं तेणेव उवेय इ–हरा आणाईया दोसा ॥ ५८९ ॥ जं केवलिणा भणिय, केवलणाणेण तनूउणाउं । तस्सण्णहा विहाणे, आणाभगो महापावो ॥ ५९० ॥ एक्केण कयमकज्जं, फरेइ तप्पव्वया पुणो अन्नो । साया वहूलपरवो, च्छेओ संजमतवाणं ॥ ५९१ ॥ मिच्छत्तं लोयस्साण, वयणमेयमिह तत्तउ एवं । वितहा सेव-णसका, कारणउ अहिगमे यस्स ॥ ५९२ ॥ एवं च णेगभविया, तिवासपरोवघायणी णियमा । जायइ जिण पडिकुट्ठा, विराहणा संजमा-याए ॥ ५९३ ॥ जह चेव उवहि रहिया, मंताई हंदिणेव सिज्झंति । होंतिय अवयार परा, तहेव एयंपि विन्नेयं ॥ ५९४ ॥ तह चेव उवहि जुत्ता, जह सफला होंति एत्थलोयंमि । तह चेव विहाणाउ, सुत्तं नियमेण परलोए ॥ ५९५ ॥ विहिदाणंमि जिणाणं, आराहिया धुवं होइ । अन्नेसिं विहिं दंसण, कमेण मग्गस्स वच्छाणं ॥ ५९६ ॥ सम्मं जहुत्तकरणे, अन्नेति अप्पणोय सुपसत्थं । आराहणाय य फला, एवं सइ संजमायाणं ॥५९७॥ तं पुण विचित्त मेत्थं, भणियं जं जंमि जंमि अंगाउ । तं जोगपिहाणाउ, विसेसउ एच्छणायव्वं ॥५९८॥ एतत्पाठस्वोपज्ञवृत्तिपाठो यथा–कालक्रमेण मासमौचित्येन संवच्छरादि तु यदाचारादिर्यस्मिंस्तत्तस्मिन्नेव संवत्सरादौ धीरा वाचयेत् न विपर्ययं कुर्यात्, स कालोऽयं वक्ष्यमाण इति ॥ ५८१ ॥ त्रिवर्ष पर्यायस्यैव नेतरस्य आचार प्रकल्पनामनिशीथाभिधानं अध्ययनं, वाच्यते क्रिया योजनीया, चतुर्वर्षस्य तु सम्यगस्खलितस्य सूत्रकृतं द्वितीयं ॥ ५८२ ॥ दशकल्प व्यवहारात्रयोऽपि पञ्चसंवत्सर दीक्षितस्यैव स्थानं समवाय इति, अङ्गेचद्वे अप्यष्टवर्षस्येति ॥ ५८३ ॥ दशवर्षस्य व्याख्येतिः–व्याख्या प्रज्ञप्ति भगवती एकादशवार्षिकस्य वामूनि क्षुल्लकविमा-नादीन्यध्ययनानि पञ्चज्ञातव्यानि। तथा क्षुल्लिकाविमानपविभत्ती महल्लियाविमाणपविभत्ती अंगचूलिया वंगचूलिया विवाहचूलिया॥५८४॥ द्वादशवार्षिकस्य, तथा कालपर्यायेण अरुणोपपातादीनि पञ्चाध्ययनादि। तद्यथा अरुणोववाए वरुणोव० गरुलोव० वेलंबोव० वेलंधरोव० वेस-

ऽङ्गादौ तद्‌योगविधानाद्ग्रन्थाद्विशेषतोऽत्राधिकारे ज्ञातव्येति ॥ ५९८ ॥

इत्यादि पाठः अयमर्थतो व्यवहारसूत्रे दशमोद्देशकेऽप्यस्ति । तद्यथा—"तिवासपरियायस्स निग्गंथस्स कप्पइ आयारकप्पे नाम मज्झयणे उद्दिसित्त एव, चउवासपरियायस्स निग्गंथस्स कप्पत्ति सुअगडे नामं अंगे उद्दिसित्तए, पंचवासपरियायस्स समणस्स कप्पत्ति ठाणसंभवाए नामं अंगे उदिसित्तए, एकारसवासपरियायस्स कप्पति, खुड्डिआ विमाणपविभत्ति महलिया विमाणपविभत्ति अंगचूलिया वंगचूलिया विवाहचूलिया नामं उद्दिसित्तए बारसवासपरियायस्स कप्पत्ति, अरुणोववाए वरुणोववाए गरुलोववाए धरणोववाए वेसमणोववाए वेलंधरोववाए अज्झयणे उद्दिसित्तए तेरसवासपरियाए कप्पति, उट्ठाणसुए समुट्ठाणसुए देविंदोववाए नागपरियावलिया नामं अज्झयणे उद्दिसित्तए चउदसवास कप्पति, चारणभावणा नामं उद्दिसित्तए सोलसवास कप्पत्ति, वेयणीसयं नामं अज्झयणं उद्दिसित्तए सत्तरसवास कप्पति, आसीविसिनामं अज्झयणे उद्दिसित्तए अट्ठारसवासकप्पति, दिट्ठिविसिभावणा नामं अज्झयणे उद्दिसित्तए एगुण वीसवासपरियायस्स कप्पत्ति, दिट्ठिवाए नामं अंगे उद्दिसित्तए वीसवासपरियाए समणे निग्गंथे सव्वसुआणवाई भवति"। एतत्पाठार्थः सुगमोऽपि किञ्चिल्लिख्यते—यथा त्रिवर्षपर्यायस्य निर्ग्रंथस्य कल्पते आचारकल्पं नामाध्ययनमुद्देशितव्यतया, अत्राचारकल्पो निशीथाभिधानाध्ययनमिति । तथा चतुर्वर्षपर्यायस्य निर्ग्रन्थस्य कल्पते सूत्रकृतं द्वितीयाङ्गमुद्देशितव्यतया, तथा पंचसंवत्सरपर्यायस्य दशाकल्पव्यवहारं पाठयितुं कल्पते, तथा अष्टवर्षपर्यायस्य स्थानाङ्गसूत्रं समवायाङ्गसूत्रं च द्वेऽपि पाठयितुं कल्पते, तथा दशवर्षपर्यायस्य साधोः भगवतीसूत्रमध्येतुं कल्पते, तथा एकादशवार्षिकस्य मुनेः क्षुल्लकविमानप्रविभक्तिः १ महलिया—विमानप्रविभक्तिः २ अंगचूलिया ३ वंगचूलिया ४ विवाहचूलिया ५ एतानि पञ्चाध्ययनान्यध्यापयितुं कल्पते, तथा द्वादशवर्षपर्यायस्य साधोर्यथाक्रमं अरुणोपपातं १ वरुणोपपातं २ गरुडोपपातं ३ धरणोपपातं ४ वैश्रमणोपपातं ५ वेलंधरोपपातं ६ एतानिषडप्यध्ययनान्यध्यापयितुं कल्पते, तथा त्रयोदशवार्षिकस्य उपस्थानश्रुतं १ समुपस्थान

श्रुतं २ देवेन्द्रोपपातश्रुतं ३ नागपरियावलियाश्रुतं ४ एतानि चत्वारि पाठयितुं कल्पते, तथा चतुर्दशवर्षस्य पर्यायस्य सुपर्णभावनाऽध्ययनं कल्पते, तथा पञ्चदशवर्षस्य चारणभावनानामाध्ययनमध्यापयितुं कल्पते, तथा षोडशवार्षिकस्य वेदिनीशतकास्याऽध्ययनं पाठयितुं कल्पते, तथा सप्तदशवर्षपर्यायस्याऽऽशीविषाध्ययनं पाठन, तथाऽष्टादशवर्षपर्यायस्य दृष्टिविषभावनानामाध्ययनमध्यापयितुं कल्पते, तथैकोनविंशति कस्य पर्यायस्य दृष्टिवादाध्ययनं पाठयितुं कल्पते, तथा सम्पूर्णविंशतिवर्षपर्यायवान् साधु सर्वसूत्रं पाठयितुं कल्पते, सर्वसूत्रवादी भवतीत्यर्थः। यदि साधुरपि निर्यापादिपर्यायाविच्छन्ने सूत्रादिक पठति एवं व्यवहारसूत्रादिषु प्रोक्तं। पञ्चवस्तुकग्रन्थे तु किञ्चिद्भेदस्तत्तु पूर्वोक्त पञ्चवस्तु-ग्रन्थपाठतोऽवसेयः, तर्हि श्रावकास्तु कथमागमानामध्येतार ? अपि तु नेति। इत्यादि सर्वसिद्धान्तेषु श्रावकाणामागमवाचने निषिद्धे। अथ पुनरपि सिद्धान्त वाक्यमवगमय्य कलावत्कल्पनीयसकलसिद्धान्तकलाकलापलुम्पकः लुम्पाकश्रमणकलीकारः निजपक्षमाविष्कुर्वन् समा-चचक्षे–ननु भवदुक्तं श्रावकाः सूत्रं नहि पठन्तीति सत्य, तर्हि श्रीदशवैकालिकसूत्रे कथमेवं प्रोक्तं यत् "पढमं नाणं तओ दया–प्रथमं ज्ञानं ततो दया" इति वचनेन ज्ञानं विना कथं दयां पालयति ? तत एवं सति तु श्रावकैरपि सूत्रं पठनीयमिति सिद्धम्। अत्रोत्तरं भो लुम्पाक ! एतद्वचने गुरुगम्यमनवगम्येव यतो दशवैकालिकसूत्रे "पढम नाणं तओ दया" इति पदं केषां प्रोक्तं तत्पाठस्तु साधूनां पठ-नाय प्रोक्तस्तत्र संयतग्रहणमोक्तत्वात्। तथा चोक्तं श्रीदशवैकालिकसूत्रे चतुर्थाध्ययने । गाथा। "पढम नाण तओ दया एवं चिट्ठइ सव्व संजए अन्नाणी किं काही किं वानाही छेयपावगं ॥ १० ॥ एतत्पाठटीकायां यदुक्तं श्रीहरिभद्रसूरिभिस्तत्पाठो यथा–एवं सति सर्वभूत दयावत पापकर्मबन्धो न भवतीति, सर्वात्मना दयायामेव यतितव्यम्। अलं ज्ञानाभ्यासेनापीति माभूदव्युत्पन्नविनेयमतिविभ्रम, इति तदपोहायाह–पढमं नाणमित्यादि प्रथमादौ ज्ञानं जीवस्वरूपसंरक्षणोपायफलविषयं, ततस्तथाविधज्ञानसमनन्तरं दयासंयमस्तदेकान्तोपादे-यतया भावयततायेव एवमनेन प्रकारेण ज्ञानपूर्वक क्रियाप्रतिपत्तिरूपेण तिष्ठत्यास्ते सर्वसंयतः सर्वप्रव्रजिता, यः पुनरज्ञानी साध्योपायफल

परिज्ञानविकलः, स किं करिष्यति, सर्वत्रान्यतुल्यत्वात्प्रवृत्तिनिवृत्तिनिमित्ताभावात् । किं वा कुर्वन् ज्ञास्यति छेकं निपुणं हितं कालोचितं
पापकं वा अतो विपरीतमिति । ततश्च तत्करणं भावतोऽकरणमेव समग्रनिमित्ताभावात् । अन्धप्रदीप्तपलायनघुणाक्षरकरणवत् । अत एवा-
न्यत्राप्युक्तम् । "गीयत्थो अविहारो, बीओगी अच्छमीसिओ । भणिओ इत्तो तइअविहारो नाणुन्नाओ जिणवरेहिं" ॥१॥ इत्यादि अतो
ज्ञानाभ्यासः कार्यः ॥१०॥ इति श्रीदशवैकालिकसूत्रबृहद्वृत्तिवचनात् पढमं नाणं तओ दया इति पाठस्तु साधूनां पठनाय प्रोक्तः "पढमं
नाणं तओदया" इति पदकथनानन्तरमेव एवं चिट्ठइ सव्वसंजए इति प्रोक्तत्वात्। तर्हि भो लुम्पाक ! श्रावकस्य कथं योजयसि सव्वसंजए
इत्यत्र सवसावए एवं सूत्रं न प्रोक्तं, ततः सन्देहः कथं तव हृदये भवति ?। पुनः शङ्कां कुर्वन् लुम्पाककुमती प्राह—ननु एवं नहिं श्रीमहा-
निशीथसूत्रे कथमेवं प्रोक्तं "अट्ठण्हंपि एआणं गोअमा जे केइ अणुवहाणेणं सुपसत्थं नाणमहीअंति, अज्झावयंति वा, अहीअंते वा, अज्झा-
वयंते वा समणुजाणंति तेणं महापावकम्मा महतीं सुपसत्थनाणस्सासायणं पकुव्वंति, से भयवं जइ एवं ता किं पंचमंगलस्सणं उवहाणं
कायव्वं ? गोयमा ! पढमं नाण तओ दया" इत्यादि । अत्रापि पाठः कथमिति चेदुच्यते—अत्र "पढमं नाणं तओ दया" इति महानिशीथ-
सूत्र पाठस्तु श्रावकाणामुपधानव्रत विधानज्ञापनाय प्रोक्तः ततो न कश्चिद्दोषः, जिनवचने सर्वथा सन्देहो न कार्यः, इति विशेषार्थः ॥
इति श्रीमत्पन्न्यासदयाविमलजित्सुशिष्यपन्न्यास श्रीसौभाग्यविमलजिद्विनेयमुक्तिविमलेन विरचितायां स्वोपज्ञागमवाचनमीमांसावृत्तौ
श्रीनवमकाव्यार्थः ॥ ९ ॥

सम्प्रोक्तं नवमे सदध्ययनके चाङ्गे द्वितीये शुभे,
दुर्वादिद्विपभेदभारिसदृसे दीपो न दृष्टो गृहे ।

तपोस्यास्तीति सुतपस्वी, तमेवं भूतं ज्ञानिनं सम्यक् चारित्रवन्तं गुरुं परलोकार्थी सेवेत। तथा चोक्तं—नाणस्स होइ भागी, थिरयरओ दंसणे चरित्तेय। धन्ना आवकहाए गुरुकुलवासं न मुञ्चन्ति ॥ १ ॥ य एवं कुर्वन्ति तान् दर्शयति, यदि वा के ज्ञानिनस्तपस्विन ? इत्याह—धीराः कर्मविदारणसंहिष्णवो धीरा वा परीषहोपसर्गाक्षोभ्या धिया बुद्ध्या राजन्तीति वा धीरा, ये केचनासन्नसिद्धिगमना आप्तो रागादिविप्रमुक्तस्तस्य प्रज्ञा केवलज्ञानाख्या तामन्वेष्टुं शीलं येषां ते आप्तप्रज्ञान्वेषिणः सर्वज्ञोक्तान्वेषिण इति। यावद्यदि वा आत्मप्रज्ञा तदन्वेषिण आत्मज्ञत्वान्वेषिण आत्महितान्वेषिण इत्यर्थः। तथा धृतिः सयमे रतिः, सा विद्यते येषां ते धृतिमन्तः, संयम धृत्याहि पञ्चमहाव्रतभारोद्वहनं सुसाध्यं भवतीति, तपः साध्या च सुगतिर्हस्त प्राप्तेति। तदुक्तम्, जस्स धिई तस्स तवो, जस्साऽतवो तस्स दुग्गई सुलहा। जेअधिइमंत पुरिसा, तवो वि खलु दुल्लहो तेसिं ॥ १ ॥ तथा जितानि वशीकृतानि स्वविषयरागद्वेषविजयेनेन्द्रियाणि स्पर्शनादीनि यैस्ते जितेन्द्रियाः, शुश्रूषमाणा यथोक्तविशेषण विशिष्टाभवन्तीति ॥ ३३ ॥ तदभि-धित्सुराह—गिहेदीवमित्यादि गृहे गृहवासे गृहपाशे वा गृहस्थभाव इति याव दीवन्ति, "दिपी दीप्तौ" दीपयति प्रकाशयतीति दीपः, स च भावदीपः श्रुतज्ञानलाभः, यदि वा द्वीपः समुद्रादौ प्राणिनामावासभूतः स च भावद्वीपः संसारसमुद्रे सर्वज्ञोक्तचारित्र लाभस्तदेवंभूतं दीपं द्वीपं वा गृहस्थभावेऽपश्यन्तोऽप्राप्नुवन्तः सन्तः सम्यक् प्रव्रज्योत्थानेनोत्थिता उत्तरोत्तर गुणलाभेनैवंभूता भवन्तीति दर्शयति, नरा पुरुषाः पुरुषोत्तमत्वाद्धर्मस्य नरोपादानमन्यथा स्त्रीणामप्येतद्गुणभाक्त्वं भवति, अथवा देवादि व्युदासार्थमिति, मुमुक्षूणां पुरुषाणामादानीया आश्रयणीया पुरुषादानीया महतोऽपि महीयांसो भवन्ति, यदि वा आदानीयां हितैषिणां मोक्षस्तन्मार्गो वा सम्यग्दर्शनादिकः पुरुषाणां मनुष्याणामादानीयः स विद्यते येषामिति विगृह्य, "मत्वर्थीयोऽदर्श आदिभ्यो जिति। तथा य एवंभूतास्ते विशेषेणेरयन्त्यष्टप्रकारं कर्मेति वीराः। तथा बन्धनेन स बाह्याभ्यन्तरेण पुत्रकलत्रादि स्नेहरूपेणोत्प्राबल्येन मुक्ता बन्धनोन्मुक्ताः संतो जीवितम् संयमजीवितं प्राणधारणं

ऽपादानेऽधिकृते त्रिविधो भवतीति शिक्षकः तद्यथा सूत्रेऽर्थे तदुभये च सूत्रादीन्यादावेव शृण्वन् सूत्रादिशिक्षको भवतीति भावः । तथैवेतत्पाठ दीपिकायां श्रीहेमविमलसूरिशिष्य हर्षकुलगणिभिरपि प्रोक्तमस्तीति । अत्र सूत्रकृताङ्गसूत्रेऽपि यः साधुः परिग्रहं जहाति स एव सूत्रवाचनायां योग्यः, नत्वन्यः, इति प्रोक्तं। तथा गृहवासे श्रुतज्ञानलाभो न भवतीति श्रावकाः सूत्रपाठं न पठन्तीत्यर्थ इत्युक्तं। अत्रापि श्राद्धानामागमवाचनं निषिद्धं, ततस्तीर्थङ्कराज्ञा पालकाः श्रावकास्तु जैनागमं नहि वाचयन्ति सूत्रेषु श्राद्धानामागमवाचननिषिद्धत्वादिति विशेषार्थः॥ इतिश्रीमत्पन्यासदयाविमलजित्सुशिष्यपन्यासश्रीसोभ्याग्यविमलजिद्विनेयमुक्तिविमलेन विरचितायां स्वोपज्ञाऽऽगमवाचनमीमांसावृत्तौ श्रीदशमकाव्यार्थः ॥ १० ॥

श्राद्धाश्चापठिता अपि प्रगदिताः श्रीसप्तमाङ्गे शुचौ,
प्राज्याः संवरसंयुताः परमिहाचाराङ्गसूत्रादिभिः ।
युक्तास्ते न हि भाषिता जिनवरैस्तेनोक्तनीत्येव च,
सार्वोक्तागमवाचने सुगृहिणां संयोग्यता नैव च ॥ ११ ॥

अथ एकादशकाव्य व्याख्यामाह। अथ सूत्रे सूत्राणामपठितारः श्रावका अपि संवरसंयुक्ताः प्रोक्ता इति दर्शयन्नाह—श्राद्धाश्चापठिता अपीत्यादि चकारः पुनरर्थे श्रीयुक्ते सप्तमाङ्गे श्रीउपासकदशाङ्गाख्येसूत्रे, कीदृशे ? शुचौ पवित्रे श्राद्धाः श्रावका अपठिता अपि सूत्राणामनध्येतारोऽपि प्राज्या बहवः संवरसंयुताः संवरभावयुक्ताः प्रगदिता प्रोक्ताः, परमिहोपासकदशाङ्गसूत्रे आचाराङ्गसूत्रादिराचाराङ्गसूत्रप्रभृतिसूत्रैर्युक्ता आचाराङ्गसूत्रादीनां धर्त्तारो इत्यर्थः । ते श्रावका हि इति निश्चये, नभाषिता न प्रोक्ता कैरित्याह—जिनवरैस्तीर्थङ्करैरिति, तेन

कारणेन एकमीत्यैव पूर्वोक्तनीत्यैव चकारः पादपूरणे, सार्वोक्तागमभाषणे सार्वैस्तीर्थङ्करैरुक्ता आगमास्तेषां भाषणे सुष्ठुशिष्याः तीर्थङ्करा-
राधकमना भावकाना संयोग्यता सम्यग्योग्यता नैव, आगमभाषणे श्रावका सम्यग् योग्यता रहिता एव, चकारः पादपूरणे । अत्रोपा-
सकदशाङ्गसूत्रेऽपि सूत्रमध्येवार न भोक्ता इति काव्यश्लोकार्थः ॥ विशेषार्थस्त्वयं, उपासकदशाङ्गसूत्रे कामदेवश्रावकाधिकारे स्फुटं प्रोक्तं
तथा च तत्पाठः—"तएणं समणे भगवं महावीरे बहवे समणे निग्गंथे निग्गंथीओ य आमंतेत्ता एवं वयासी जइ ताव अज्जो समणोवासगा
गिहिणो गिहमज्झे वसंता दिव्वमाणुस तिरिक्खजोणिए उवसग्गे सम्मं सहंति, जाव अहियासंति सक्का पुणाइ अज्जो समणेहिं दिव्वमाणु-
सतिरिक्ख जोणिए उवसग्गे सम्मं सहित्तए जाव अहियासित्तए तओ ते बहवे समणा निग्गंथा निग्गंथीओ य एयमट्ठं विणएणं पडिसुणे-
ति तएणं से कामदेवे समणं भगवं पसिणाइं पुच्छइ" एतत्पाठस्यार्थो यथा—तएणमिति तदा श्रमणभगवन्महावीरः बहवे समणे निग्गंथे
निग्गंथीओ यत्ति बहून्निर्ग्रन्थान्निर्ग्रन्थींश्च, आमंतेत्ता आमंत्र्य आहूयेति, यावदेवं वयासिमि एवमवादीत् । किं वदित्याह—जइ ता-
वदज्जो भो आर्याः ! यदि समणोवासगगिहिणो श्रमणोपासकगृहस्थाः, गिहमज्झे वसंता गृहमध्ये वसन्तोऽपि दिव्वमाणुस
तिरिक्खजोणिए देवमनुष्य तिर्यक्सत्कान्, उवसग्गा उपसर्गान्, सम्ममिति सम्यक्, सहंइ सहन्ते, अहियासेइ अदीनमन-
स्तया अध्यासयन्ति, सक्का पुणाइ अज्जो हे आर्याः ! तर्हि विशेषतो भवद्भिस्तु तादृग्उपसर्गसहने सामर्थ्यवन्तो भवितव्यं, कथमिति चेदु-
च्यते समणेहिं निग्गंथेहिं इति श्रमणनिर्ग्रन्थैः, दुवालसङ्गमिति द्वादशाङ्गी गणिपिडगमिति गणेराचार्यस्य पेटा इति गणिपिटकं,
अहिज्जमाणेहिं मिति अधीयमानैः, दिव्वमाणुसतिरिक्खजोणिए उवसग्गे इति दिव्यमनुष्यतिर्यक्सम्बन्धिनामुपसर्गाणां सम्म
सहित्तए सम्यक् सहने, जाव अहियासीत्तए इति यावदध्यासयने सामर्थ्ययुक्ता भवद्भिर्भाव्यमिति। तओ इति ततः ते बहवे समणा
निग्गंथा इति ते बहवः श्रमणा निर्ग्रन्था, निग्गंथीओ य साध्व्यश्च, एयमट्ठं विणएणं पडिसुणेतित्ति एवमर्थं भगवदुक्तमर्थं विनयेन

श्रृण्वन्ति इति समुदायार्थः, भावार्थस्त्वयं:-भगवता महावीरेण साधून् साध्वीश्च प्रति एवं प्रोक्तं, यदि श्रावका अपि सम्यगुपसर्गान् सहन्ते, तर्हि यूयं तु द्वादशाङ्गी समध्येतारस्ततो भवद्भिः साधुभिस्तु विशेषतः उपसर्गाः सहनीयाः इति भावः। अत्रोपासकदशाङ्गसूत्रपाठेऽपि सूत्राणामपठितारः श्रावकाः संवरभावयुक्ताः प्रोक्ता इति तात्पर्यं, तएणं से कामदेवे इति तदनुकामदेव श्रावकः समणं भगवं पसिणाइ पुच्छइ इति श्रमणभगवन्तं महावीरमिति प्रश्नादिकं पृच्छति, इति सूत्रार्थः। तथा तस्मिन्नेवोपासकदशाङ्गसूत्रे कुंडकोलिकाख्य श्रावकाधिकारेऽपि श्रावकाणामागपठनं न प्रोक्तं, किन्तु साधूनामेव, तथा च तत्पाठः-"कुंडकोलियाइ समणे भगवं महावीरे कुंडकोलियं एवं वयासी, से नूणं कुडलकोलियाकल्ल तुज्झ पुव्वावरण्ह कालसमय सि, असोग वणियाए एगे देवे अंतियं पाउभवित्था तएणं से देवे णाममुद्दं च तहेव जावपडिगए, से नूणं कुंडलकोलिया अट्ठे समट्ठे हंता अच्छितं धन्नोसिणं तुमं जहा कामदेवे" एतत्पाठशब्दार्थो-यथा कुंडकोलियाइ इति हे कुंडकोलिक! इति समामन्त्र्य, स समणे भगवं महावीरे इति श्रमणभगवान् महावीरः, कुण्डकोलियायमिति कुण्डकोलिकश्रावकं प्रति एवं वयासीए इति एवमवादीत्, यदवादीत् तदाह से नूणं कुण्डकोलिया इति हे कुण्डकोलिक! निश्चयं कल्लमिति गतदिने, तुज्झमिति तव पुव्वावरण्हकालसमयं सित्ति पूर्वापराण्हकालसमये मध्यान्हसमये इत्यर्थः, असोग वणियाए इति अशोकवाटिकायां, एगे देवे अंतियं पाओ भवित्था इति त्वत्पार्श्वे कश्चिदेको देवः प्रादुर्भूतः प्रादुर्भूय किं कृतमित्याह-तएणं से देवे ततः स देवः, णाममुद्दे चेति तव नाममुद्रिका, तहेव जावपडिगए इति तथैव यावत्प्रतिगतोऽत्र यावच्छब्देन नाममुद्रा वस्त्रादीनि देवतया गृहीतानि प्रष्टानि प्रश्नानि देवताकृतप्रश्नानामुत्तराण्यपि त्वया दत्तानि क्रमेण प्रश्नानामुत्तर विधाने सति देवः यथाऽऽयातस्तथा गत इति सूचितं। से नूणं कुंडकोलिया इति ततो निश्चयेन भो कुण्डकोलिक। अट्ठे समट्ठे इति अयमर्थः समर्थः? इति भगवन्महावीरस्वामिवचनमाकर्ण्य कुण्डकोलिक श्रावकोऽपि भगवन्तं प्रति प्राह हंता, अत्थिचित्ति हे भगवन् एतत्सत्यं, तदाकर्ण्य भगवान्माह। तं धन्नो सिणं तुममिति त्वं धन्यः प्रशंस्यः,

कुत्रिकं स्वर्गमर्त्यपातालं लक्षणं भूमित्रयं तत्सम्भवं वस्त्वपि कुत्रिकं, तत्सम्पादने आपणो हट्टः कुत्रिकापणस्तद्भूताः, समीहितार्थ सम्पादनलब्धियुक्तत्वेन तदुपमाः। परवाइय पमद्दणत्ति तन्मतप्रमर्दनात् "परवाइहिं अणाक्कंता" इत्यादि चोद्दसपुव्वीत्यन्तं वाचनान्तरं, अत्र अनुपक्रान्ता अनाक्रान्ता अनिराकृता इत्यर्थः। अत्र उञ्छिएहिं ति अन्ययूथिकैः परतीर्थिकैः अणोद्धसिज्जमाणंति अनपध्यस्यमानाः माहात्म्यादपात्यमाना विहरन्ति विचरन्ति। अप्पेगइया आयारधरेत्येवमादीनि षोडशीविशेषणानि सुगमानि, नवरं सूत्रकृतधरा इत्यस्य प्राक्तनाङ्गधरणाविनाभूतत्वेऽपि तस्यातिशयेन धरणात्सूत्रकृतधरा इत्याद्युक्तमत एव विपाकश्रुतधरोक्तावपि एकादशाङ्गविद इत्युक्तं। अथवा विदेर्विचारणार्थत्वादेकादशाङ्गविचारकाः, नवपूर्वादिग्रहणं तु तेषां साऽतिशयत्वेन प्राधान्यख्यापनार्थमिति चतुर्दशपूर्वित्वे सत्यपि द्वादशाङ्गित्वं केषाञ्चिन्न स्याच्चतुर्दशपूर्वाणां द्वादशाङ्गस्यांशभूतत्वात्, अत आह दुवालसंगिणोत्ति तथा द्वादशाङ्गिकत्वेऽपि न समस्तश्रुतधरत्वं, केषाञ्चित् स्यादित्यत आह—सम्मत्त गणिपिडगधरा गणीनामर्थपरिछेदानां पिटकमिव पिटकं स्थान गणिपिटकं, अथवा पिटकमिव वालुंजुकवाणिजक सर्वस्वाधारभाजनविशेष इव यत्तत्पिटकं गणिन इति आचार्यस्य पिटकं, प्रकीर्णकश्रुतादेशश्रुतनिर्युक्त्यादि युक्तं जिनप्रवचनं समस्तमनन्तगमपर्यायोपेतं गणि पिटकं धारयन्ति ये ते, तथा। अत एव सव्वक्खरसन्निवाइणोत्ति सर्वे अक्षरसन्निपातावर्णसंयोगा ज्ञेयतया विद्यन्ते येषां ते तथा। सव्वभासाणुगामिणोत्ति सर्वभाषा आर्यानार्यामरवाचः अनुगच्छन्त्यनुकुर्वन्ति तद्भाषं भाषितत्वात् भाषयैव वा लब्धिविशेषात्तथाविधप्रत्ययजननात्। अथवा सर्वभाषाः संस्कृतप्राकृतमागधाद्याः अनुगमयन्ति व्याख्यायन्तीत्येवं शीला ये ते तथा। अजिणात्त असर्वज्ञाः सन्तो जिनसंकाशा जिन इवावितथं व्याकुर्वाणाः इति श्रीऔपपातिकसूत्रवृत्तिवचनात् श्रीआचाराङ्गादीनां धर्तारः साधवः प्रकटमेव प्रोक्ताः, परं श्रावकानप्रोक्तास्तर्हि भो लुंपाककुमते! कथमसत्यसम्भावनां कुरुषे? किञ्च श्रावकास्तु "लद्धट्ठागहियट्ठात्यादि" सिद्धान्तप्रामाण्यात्, अर्थग्राहका एवोक्ता स्ततस्तीर्थंकराज्ञा परिपालकाः श्रावकास्तु

जैनागमसमूहं नहि पाठयन्तीति विशेषार्थः ॥

इति श्रीमत्पन्यासदयाविमलमित्रशिष्यपन्यासश्रीसौभाग्यविमलजिद्विनेयपन्यासमुक्तिविमलेनविरचितायां स्वोपज्ञाऽऽगमवाचन मीमांसा गूढवृत्तौ श्रीएकादशकाव्यार्थः ॥

सम्प्रोक्त प्रवरोत्तराध्ययनके सूत्रे सुचम्पापुरी,

वास्तव्यो वरपालिताह्वय वणिग् वा कोविद श्रावक ।

नाधीत कथितोऽत्र तेन शमिनां सिद्धान्तपाठश्च हि,

नान्येषा श्रमणाननश्रुतमहत्सूत्रा गृहस्थास्त्विति ॥ १२ ॥

अथ द्वादशकाव्यव्याख्यामाह । अत्र द्वादशेकाव्ये पराशङ्कानिरासायोपरमाह–यथा कश्चित्स्वमाकमतौ माह–ननूत्तराध्ययनसूत्रे श्रावकस्य 'कोविद' इति विशेषणं योजितं, तर्हि सूत्रपठनमन्तरेण श्रावकः कोविदः कथं भवति ? इति स्वल्पकमतिशङ्काऽपनोदाय मतिवचनमाह–सम्प्रोक्तं प्रवरोत्तराध्ययनके इति । प्रवरे श्रेष्ठे उत्तराध्ययनके सूत्रे उत्तराध्ययननाम्नि सूत्रे सम्प्रोक्तं प्रकथितं जिनैरिति शेषः । यत्प्रोक्तं तदेवाह सुचम्पापुरिवास्तव्यः शोभनचम्पानगरी निवासीक इत्याह वरपालिताह्वयवणिक् श्रेष्ठ पालितनामा वणिक्, स हि कीदृश ? कोविद दक्ष, वा पुनरर्थे, श्रावकः श्रावकधर्माराधक स्यात् । अत्र सूत्रे अधीतः इति न कथितः तत्राधीत इति शब्दो न प्रोक्त इत्यर्थः । नेति तेन कारणेन, चकारः पुनरर्थे, सिद्धान्तानामागमानां पाठस्तु शमिनां साधूनामेवाभिहितः नान्येषामिति । अन्येषां मूलोत्तरगुणसमन्वितानगारव्यतिरिक्तानां सिद्धान्ताध्ययनं न मोक्षमिति । गृहस्थास्तु कीदृशाः ? श्रमणस्याऽऽननं मुखं श्रमणाननं, तेन श्रम-

णाननेन श्रुतानि महत्सूत्राणि बृहत्सुत्राणि यैस्ते, श्रमणाननश्रुतमहत्सुत्राः गृहस्था इति साधूनां मुखतः सिद्धान्तश्रवणकारा श्राद्ध इत्यर्थः, ईदृशाः श्रावका भवन्तीति शब्दार्थः ॥

विशेपार्थस्त्वयं–उत्तराध्ययनसूत्रे एकविंशतितमाध्ययने कोविद इति विशेषण पालितश्रावकस्य प्रयोजितं । तथा च तत्पाठः । गाथा–"चंपाए पालिए नाम सावए आसिवाणिए । महावीरस्स भगवओ सिस्सो सोओ महप्पणो ॥ १ ॥" तद्व्याख्या–चंपाए इति, चम्पायां नगर्यां, पालिए इति पालित इति नाम्ना श्रावको देशविरतिधारी, वाणिए इति वणिग् आसि आसीत् । कीदृशः स वणिग् ? भगवओ इति भगवतो महावीरस्सेति महावीरस्य, महप्पणो इति महात्मनो महापुरुषस्य, तीर्थङ्करस्य शिष्यः शिष्याधारकः सोउ इति स पुनः पालितो नाम श्राद्ध· कीदृशो वर्त्तते तदाह । गाथा–निग्गंथे पावयणे सावए सेवि कोविदे । पोएण ववहरं ते पि हुंडं नगरमागए ॥ २ ॥ तद्व्याख्या–स पालितनामा श्रावको महात्मा, नैर्ग्रन्थे प्रावचने श्रीवीतरागस्य सिद्धान्ते, कोविदोऽभूदतिचतुरोऽभूदर्थत इति गम्यं । नोचेत्तर्हि निग्गंथे पावयणे इति वचनेनसहैव विरोधापत्तिः, निर्ग्रन्थ सम्बन्धिप्रवचन प्रोक्तत्वात्। स पालितनामा श्राद्धः एकदा पोतेन यानपात्रेण व्यवहरन् प्रवहणेन वाणिज्यं कुर्वन् पिहुड नाम नगरमागतः । चम्पानगरीतः प्रवहणमारुह्य व्यापारार्थं पिहुंडनगरं समायातः इति भावः ॥ २ ॥ इति श्रीउत्तराध्ययनसूत्रस्यैकविंशतितमाध्ययने ॥ निग्गंथे पावयणे इति सिद्धान्तवचनेन सिद्धान्तपठनपाठनाधिकारस्तु साधूनामेव । किंचात्र श्रावकस्य कोविद इति विशेषणं योजितं तद् अर्थधारणयैव सिद्धान्ते प्रवीणः, न तु सूत्रपाठतः । कथम् ? इति चेदुच्यते–निश्चयं भगवतीसूत्रराजप्रश्नीयादिसूत्रेषु श्रावकाः लद्धट्ठागहियट्ठा इत्यादि पाठप्रोक्तत्वात् । कुत्रापि लद्धसुत्ता गहियसुत्ता इति कथनाऽभावात् । अत्रापि श्रावकः कोविद इति प्रोक्तः, परमधीत इति न प्रोक्तः । कोविद इति शब्देन चतुरो दक्षः पण्डितः प्रोच्यते, अधीतशब्देन च पठनमुच्यते यथा श्लोकः । आद्ये वयसि नाधीतं द्वितीये नार्जितं धनम् । तृतीये न तपस्तप्तं,

यत्र ये श्रावकाः सूत्रार्थानवधारणयाऽपि सकलसूत्रस्यार्थधारिणस्तेऽपि कोविदा निगद्यन्ते, आधुनिककालेऽपि केचन श्रावकाः सूत्रा-ध्ययनमन्तरेणापि सूत्रसारेण यद्वा तद्वा चतुरा दृश्यन्ते, ततो भो लुम्पाकमतेऽस्मिन् अत्र कः सन्देहः समुत्पद्यते ? अपि त्वत्र न सन्देहः कश्चिदिति । परं व्याकरणन्यायकोशादिशास्त्रविकलानां लुम्पाकमतिनां शब्दसिद्धिविभक्तिपर्यायज्ञानादितर्कज्ञानशब्दज्ञानादिकं कुतो भवति ? नहि व्याकरणशास्त्रमन्तरेण शब्दसिद्धिविभक्तिपर्यायज्ञानं भवति । तथा न्यायशास्त्रमन्तरेणापि तर्कज्ञानं नोत्पद्यते, कोशादिशास्त्रमन्तरेण शब्द-ज्ञानमपि न जायते इति । ततो व्याकरणादिशास्त्रशून्यकानां लुम्पकमतीनां कोविदशब्देन किमुच्यते वाचीवशब्देन किमुच्यते इति ज्ञानं कुतो भवति ? अपि तु नश्यति स्वयं । पुनरत्र मुग्धसिद्धान्तलुम्पका लुम्पकमतानुसारिकाः स्वपक्षसाधिपत्यार्थेन समाधत्ते—ननु सूत्रं पठन् सम्यक्त्व-माप्नोतीति श्रीउत्तराध्ययनसूत्रे प्रोक्तं, तर्हि मिथ्यादृष्टिरपि सूत्रं पठेदिति सम्भाव्यते । यतः—श्रीउत्तराध्ययनसूत्रेऽष्टाविंशतितमाध्ययने सूत्रं पठन् सम्यक्त्वमाप्नोतीति । तथा च तत्पाठः—"जो सुत्तमहिज्जंतो, सुएण ओगाहई उ सम्मत्तं । अंगेण बाहिरेण व, सो सुत्तरुइ त्ति नायव्वो ॥ १ ॥" तद्व्याख्या—स सूत्ररुचिर्ज्ञातव्यः य सूत्रेण आगमेन सम्यक्त्वं अवगाहते प्राप्नोति । कीदृशेन सूत्रेण ? अंगेन आचाराङ्गादिना, वा अथवा बाहिरेण बाह्येन अंगप्रविष्टेन उत्तराध्ययनादिना, सम्यक्त्वं गोविन्दवाचकवल्लभते स सूत्ररुचिर्ज्ञेयः । इति श्रीउत्तराध्ययनसूत्रेऽष्टाविंशतितमाध्ययनवचनात् । सूत्रं पठन् सम्यक्त्वमाप्नोति, तर्हि श्रावकः कथं न पठेदिति लुम्पकमतेरभिप्रायः । अथोत्तर—भो लुम्पाक एतदपि तव चिन्तनमागमाऽपरिज्ञानविजृम्भितं, यतो श्रीउत्तराध्ययनसूत्रस्यैतेन वाक्येनाऽपि न श्रावकाणामागमपठनत्वमायाति । अत्र सूत्रे सूत्रपठनेन सम्यक्त्वमवगाहते तत्र उपलक्षणत्वेन भाव्यं । यथा—उडुप अलंकरणविशेषः 'भाषो' इति, लोकप्रसिद्धं, स हि सर्वेऽप्यङ्ग-प्रवगाहते तद्वत्सदैव सम्यक्त्वमवगाहते इति दृष्टान्तेन साधूनां सदैव सम्यक्त्वमवगाहनमागतं । परं मिथ्यादृष्टिः सूत्रं पठन् सम्यक्त्वमाप्नोति इति वचनं तु हरिलोऽपि मदिरावासितचेतस्को वा न वदति । किञ्च कालायाइनीयकर्मोदयवशतो यस्य साधो अर्हिमानः प्रवर्तते स

साधुः सूत्रं पठन् निःशङ्कितभावं कुर्यात् । तदनु निःशङ्कितसूत्ररुचिनामा सम्यक्त्वमवगाहते, इति सम्यगर्थः । तथा यः साधुः गृहस्थानामन्यतीर्थिनां मिथ्यादृष्टीनामिति यावत्सूत्रवाचनां ददाति तस्य तु साधोश्चतुर्मासप्रायश्चित्तमायाति । तत्तु चतुर्दशकाव्यव्याख्यायामग्रे वक्ष्यते, तर्हि पठनं तु दूरं गतं । भो लुम्पक ! त्वया विचार्यं शुद्धश्रावकास्तु जैनागमं न पठन्ति वाचयन्ति श्रावकाणामागमेष्वागमवाचननिषिद्धत्वात्, इति विशेषार्थः ॥ इति श्रीमत्पन्न्यासदयाविमलजित्सुशिष्यपन्न्यासश्रीसौभाग्यविमलजिद्विनेयपन्न्यासमुक्तिविमलेन विरचितायां स्वोपज्ञाऽऽगमवाचनमीमांसावृत्तौ श्रीद्वादशकाव्यार्थः ॥ १२ ॥

दत्तं तीर्थधवैः समव्रतभृतां सत्यं वर सूत्रतः,
देवानां च नृणां सुदर्शनयुजां सत्यं पुनश्चार्थतः ।
प्रश्नव्याकरणाङ्कके प्रकथितं शुद्धे द्वितीये खलु,
द्वारे संवरसंज्ञके गणधरैर्भव्योपकाराय च ॥ १३ ॥

अथ त्रयोदशकाव्यव्याख्यामाह ॥ अत्र त्रयोदशे काव्ये प्रश्नव्याकरणसूत्रे साधूनामेव सूत्रतः सत्यं दत्तमन्येषामर्थत इति दर्शयन्नाह—दत्तं तीर्थधवैरिति । तीर्थधवैस्तीर्थङ्करैः समव्रतभृतां सर्वेषा साधूनां वरं श्रेष्ठं सूत्रतः सत्यं दत्त समर्पितं, तत्कारणात् सूत्रपठने साधुरेवाधिकारी । चकारः पादपूरणे । देवानां नृणां च । कीदृशां ? सुदर्शनयुजांशोभनसम्यक्त्वधारिणां पुनः अर्थतः सत्यं तीर्थकरैर्दत्तं । तत्कारणात् सम्यक्त्वधत्तारो देवामनुष्याश्च आगमार्थस्य धर्त्तारः । ननु सूत्रपाठतः इत्युक्तवाक्यं कस्मिन् सूत्रे प्रोक्तमित्याह—प्रश्नव्याकरणाङ्कके इति । प्रश्नव्याकरणनाम्नि दशमाङ्गे । तत्रापि शुद्धे निर्मले खलु अवधारणे संवरसंज्ञके संवरनाम्नि द्वितीये द्वारे प्रकथितं । कैरित्याह—

गणधरो हि द्वारं ! भव्योपकारायेति । भव्याः मोक्षस्य गमनयोग्यास्तेषामुपकारायैवेति । चकारः पुनरर्थे, इति काव्यद्वयार्थः ॥

अथ विस्तरार्थः—श्रीप्रश्नव्याकरणसूत्रे द्वितीये संवरसंज्ञके द्वारे तथापि द्वितीयाध्ययने भगवता श्रीमन्महावीरेण साधूनां सूत्रपाठतः सत्यं समर्पितं । देवेन्द्रनरेन्द्रमनुष्यादीनामर्थतः सत्यं दत्तं । तथा च तत्पाठः—"अणसाय सच्चवादी सा विज्जाभियं देवयाउ करेंति सच्चवयणे रयाणं घोरसुरीरिं पाहुडस्स विविहं महरिसीणय सहियं", तत्रैतत्पाठटीकायां, यदुक्तं श्रीअभयदेवसूरिभिस्तत्पाठो यथा—अनघात निर्दोषाः सत्यवादिनः, सा विद्यानि च साभिप्रायानि च देवताः कुर्वन्ति सत्यवचनरतानां । आह च—प्रियं सत्यं वाक्यं हरति हृदयं कस्य न जने, गिरं सत्यां लोकः प्रतिपदमिमामर्थयति च । सुराः सत्याद्वाक्याद्भवममितं नास्ति भुवने ॥ १ ॥ तमिति यस्मादेवं तस्मात्तस्य द्वितीयमहाव्रतं भगवन्महावीरकं तीर्थकरप्रभाषितं । किंविधं ? दशविधं दशप्रकारं जनपदसम्मतसत्यादिभेदेन दशवैकालिकादिप्रसिद्धं चतुर्दशपूर्विभिः प्राभृतार्थं विदितं पूर्वगतांशविशेषा विवेचनया ज्ञातं महर्षीणां च समयेन सिद्धान्तेन प्रदत्तमिति अथवा समयप्रतिज्ञा वा समाचाराभ्युपगमः पाठान्तरे "महरिसिसमयपइण्णचिण्णंति" महर्षिभिः समयप्रतिज्ञासिद्धान्ताभ्युपगमः समाचाराभ्युपगमो चेति । तथा देवेन्द्रनरेन्द्रैर्भाषितो भणितोऽर्थः पुरुषार्थस्तत्साध्यो धर्मादिर्यस्य तत्तथा अथवा देवेन्द्रनरेन्द्राणां भाषितमर्थ भाषितोऽर्थः प्रयोजनं यस्य तत्तथा । अथवा देवेन्द्रादीनां भाषिता अर्थाः जीवादयो जिनवचनरूपेण येन तत्तथा । तथा वैमानिकानां साधितं प्रतिपादितमुपास्यत्वेन तत्तथा । वैमानिकैर्वा साधितं उपासेवितं समर्पितं वा तत्तथा । इति श्रीप्रश्नव्याकरणसूत्रवृत्तिवचनात् तीर्थङ्करे साधूनां सूत्रं सत्यं दत्तं । तथाऽर्थतस्तु देवमनुष्याणां । ततो वीतरागाज्ञया साधुभिरेव सूत्रमध्येतव्यं, सूत्रे गृहस्थानां सूत्रमध्येतव्यमिति तु मोक्षं । देवेन्द्रनरेन्द्रप्रमुखास्तु सिद्धान्तार्थमाकर्ण्य सत्यवचनं जानन्ति तेन हेतुना श्रावकाः सूत्रपाठं न पठन्ति । किञ्च तीर्थकरैश्चतुर्विधसङ्घस्यागमनानुसारे "उप्पन्नेइ वा विगमेइ वा धुवेइ वा" इति त्रिपदी द्वादशाङ्गीरहस्यरूपा गणधराणामेव दत्ता । तत् त्रिपद्यनुसारेण गणधरा द्वादशाङ्गीमा

चतुर्थं किं करिष्यति ॥ १ ॥ इति कोविदस्तु व्याकरणन्यायकोशादि शास्त्रवेत्तारोऽपि भवन्ति। जैनागमे कोविद इति प्रोक्ते न कश्चिद्दोषः। सूत्रितवन्तस्तेन हेतुना साधव एव सूत्रपाठपठनेऽधिकारिणः, परं न तु श्राद्धादय इत्यादि। यदि श्राद्धानामागमवाचनपठननिषेधरूपान् एतादृगागमपाठान् अवगणय्य गृहस्थाः सूत्रपाठं पठन्ति तेषां तीर्थंकराज्ञाभङ्गतीर्थङ्करादत्तदानादयो दोषा प्रादुर्भवन्ति। जिनैः सूत्रे श्रावकाणामागमवाचन निषिद्धत्वात्, गणधराणां त्रिपदी दत्तत्वाच्च। तीर्थंकराज्ञोल्लङ्घने च जीवानां ससारवृद्धिर्भवतीति। तत्कारणाज्जिनाज्ञा परिपालकाः श्राद्धास्तु जैनागमं नहि पठन्ति वाचयन्ति च सूत्रेषु श्राद्धानामागमवाचननिषिद्धत्वादिति विस्तरार्थः ॥

इति श्रीमत्पन्न्यासदयाविमलजित्सुशिष्यपन्न्यासश्रीसौभाग्यविमलजिद्विनेयपन्न्यासमुक्तिविमलेन विरचितायां स्वोपज्ञागमवाचनमीमांसावृत्तौ श्रीत्रयोदशकाव्यार्थः ॥ १३ ॥

गृद्धानां विगयैः शरीरकभृतां देया न सद्वाचना,
स्थानाङ्गे गदितं कृतांतपठने लिप्सापि नेहा त्रये।
श्राद्धानामिति जायते च ददता मोको भृतां वाचनां,
साधूनां सुनिशीथसूत्र उदितं मासां चतुर्णां तपः ॥ १४ ॥

अथ चतुर्दशकाव्यव्याख्यामाह—अत्र काव्ये विगयलोलुपानां प्राणिनां सूत्रवाचना न देया, तथा श्राद्धानां मनोरथत्रये सूत्राध्ययन मनोरथोऽपि नास्ति। श्राद्धानामागमवाचनां ददतां साधूनां चतुर्मासस्तकप्रायश्चित्तं भवतीति दर्शयन्नाह:—गृद्धानां विगयैरिति एतल्लक्षणानां प्राणिनां साधुभिः सूत्रवाचना न देया। किंलक्षणानामित्याह—विगयैः घृतपक्वान्नतैलगुडदधिदुग्धाभिधानाभिः जैनशासनप्रसिद्धाभिः

गृद्धोऽनुपधानकारीति भावः। इहापि दोष एष, यदाह–“अतवोनही होइ जोगो, नयफलए हि च्छियं फलं विज्जा अविफलंति विउलमगुणं साहण हीणा जहा विज्जत्ति ॥ १ ॥” अन्यवसितमनुपशान्तं प्राभृतमिव प्राभृतं नरकपालकौशलिक परमक्रोधो यस्य सो व्यवसितप्राभृतः उक्तं च–अप्पेवि पारमार्णि, अवराहे वयंइ रवामियं तं च। बहुसो उदीरयन्नो, अविओसिय पाहुडो स खभुत्ति ॥ १ ॥” पारमार्णि परमक्रोधसमुद्धातं व्रजतीति भावः। एतस्य वाचने इह लोकतस्त्यागोऽस्य प्रेरणायां कलहनात्, प्रांतदेवताच्छलनाच्च परलोकतोऽपि त्यागः। तत्र श्रुतस्य निष्फलत्वादूषरक्षिप्त बीजवदित्याह च–दुविहो उ परिच्चाओ, इह चोग्रणकलह १ देवयाच्छलनं २। परलोगंमि य अफलं, खिचंपि व उसरे वीयंति ॥ १ ॥” एतद्विपर्ययसूत्रं सुगमं। श्रुतदानस्यायोग्या उक्ता, तथैव चोक्तं वृत्तिगतगाथा वृतावपि। तथा च तत्पाठः “इह रथ वित्तावयप्भइ, अविणीनुलंभ तु किमुसुएणं। माणठ्ठो नासिहिइं, खएव रवावावसे गोओउ ॥७८॥” इतरथापि श्रुतप्रदानमन्तरेणापि तावदविनीतः सूच्यते स्तब्धो भवति, किं पुनः श्रुतेनलंभितः सन् ? महिमानमिति शेषः। अतः स्वयं नष्टोऽसावन्यानपि पठ्यमानान् शिष्यान् क्षते क्षारावसेको माभूदिति कृत्वा नासौ वाचनीयः। अपि च–“ गो जुहस्स पडागा, सयं पलायस्स वड्डइ। अवेगदोसोदएणं, समणं न होइ न नियाणतुल्लं वा ॥ ७९ ॥ व्या०–इह गोपालको गवामग्रतो भूत्वा यदापताकां दर्शयति तदाशीघ्रतरं गच्छतीति श्रुतिः। ततो गोयूथस्य स्वयं प्रयातस्य, यथा पताकावेगं वर्द्धयति, तथा दुर्विनीतस्याऽपि श्रुतप्रदानमधिकतरं दुर्विनयं वर्द्धयति। यथा दोषाणां रोगानामुदये शमनमौषधं न दीयते। यतश्च निदानादुत्थितो व्याधिस्ततुल्य तत्सदृशमिव वस्तु रोगवृद्धिभयान्न दीयते, यद्वा दोषोदये दीयमानं शमनं न निदान तुल्यं भवति किन्तु प्रत्युपजारायभवति ततो न दातव्यं एवमस्यापि दुर्विनयदोषभारवर्त्तमानस्य श्रुतौषधमहितमिति कृत्वा न दातव्यं। “ विणया ही आविज्जा, देइ फलं इह परे अ लोगंमि। न फलतविणयगहिआ, सस्साणियतो अहीणाइं ॥ ८० ॥ व्या०–विनयेनाधीता विद्या इह परत्र लोके फलं ददाति जनपूजा नयत यशःप्रवादलाभदिकमैहिकं निःश्रेय-

सादिकं चामुष्मिकफलं ढौकयन्तीति विनयहीनास्तु वा अधीता न फलन्ति शस्यानीव तोयहीनानि यथा जलमन्तरेण धान्यानि न फलन्ति । "भवतो न होइ जोगो, नय फलए इच्छियं फलं विज्जा । भविफलदि विज्जमगुणं, साहण हीणा जहा विज्जा ॥ ८१ ॥ व्या० अतपास्तपसा विहीनो योगः श्रुतस्योद्देशनादि व्यापारो न भवति, न च तपसा विना गृह्यमाणा विद्या श्रुतज्ञानरूपा ईप्सितं मनोभिमतं फलति, अपीत्यभ्युच्चये मत्युतविपुलमगुणमनर्थं फलति, यथा साधनहीनाविद्या यस्याः महति मद्यविकायाः विद्याया उपवासादिको यः साधनोपचारः सा तमन्तरेण गृह्यमाणेति भावः । अथ व्यवसितप्राभृतं व्याचष्टे—अप्पेव पारमाणि, अवराहे वयइ खामियं तं च । बहुसो उदीरयंतो भवि तु सियपाहुडो स खलु ॥ ८२ ॥ व्या० अल्पेपि परुषभाषणादावपराधे पारमाणि परमं क्रोधसमुद्धतं यो व्रजति, तथ समितमपि यो बहुश उदीरयति, स खल्वव्यवसितप्राभृतउच्यते । अस्य वाचने दोषानाह—"दुविहोत्र परिचायं, इह चोयणकलह देवयाच्छलणं । परलोगंमि य अफलं, खित्त पिवऊसरे बीयं ॥ १८३ ॥ दुर्विनितादेरपात्रस्य वाचनादाने द्विविध परित्यागः इह परलोकभेदाद्भवति, तत्रेह परित्यागो नाम स यदि स्मारणादिना प्रेर्यते तदा कलहं करोति, अपात्रवाचनेन च प्रमत्तं प्रान्तं देवताच्छलयेत्, परलोके तु परित्यागस्तस्य श्रुतदानमफलं सुगति बोधिलाभादिक पारत्रिकं फलम् न प्रापयति ऊपर इव च क्षेत्रे बीजमुप्तं यथा निष्फलं भवति । अथ स्थानाङ्गसूत्रे तत्रैव स्थाने त्रयः पुरुषाः सूत्रवाचनायां योग्यास्त्रयाणां पुरुषाणां सूत्रवाचनादेयेत्यर्थ । तथा च तत्पाठ । "तिओ कप्पति वाइत्तए तं जहा विणीए अविगइपडिबद्धे विओसियपाहुडे इति । एतत्पाठस्यभावात् शब्दार्थौ, यथा त्रिप्रकाराणां साधूनां कल्पन सूत्रवाचनादानं तं जहा इति तद्यथा विणीए इति य साधुः विनीतो विनयवान् भवेत्, तस्य कल्पते । तथा यः साधुः अविगइ पडिबद्धे इति घृतादि विकृतिभिर्विगयैरप्रतिबद्धोऽत एव योगोपधानकरणे समर्थस्तस्य, तथा विओसियपाहुड इति व्यवसितप्राभृत उपशान्तकोप क्षमावान् महि सूत्रपठनपाठने योग्य स सूत्रवाचनायां योग्यात्यर्थः । एते त्रिप्रकारा साधव सूत्रवाचनायां योग्या इति ।

अत्रापि विगयगृद्धानां वाचनाऽदेयेत्युक्तमिति। अथ श्रावका यदि सूत्रपठने योग्या भवेयुस्तर्हि श्रावकाणां त्रिषु मनोरथेषु कथं सूत्रपठनमनोरथो न भवेदित्याह–श्रावकाणां मनोरथत्रयेऽप्यागमपठनमनोरथो नोक्तस्तथैव स्थानाङ्गसूत्रे तृतीयस्थानके श्रावकाणां त्रयो मनोरथाः साधूनां च त्रयो मनोरथाः पृथक् पृथग् विवक्षितास्तथा च तत्पाठः "तिहिं ठाणेहिं समणे णिग्गंथे महानिज्जरे महापज्जवसाणे भवइ, तं जहा–कयाणं अहं अप्प वा बहुं वा सुयं अहिज्जिस्सामि, कयाणं अहमेकल्लविहार पडिमं उवसंपज्जित्ताण विहरिस्सामि, कयाणं अहमवच्छिममारणंति य सलेहणा झूसणा झूसिए भत्तपाणपडियाइ क्खिए पाओवगए कालमणवकंखमाणे विहरिस्सामि, एवं समणसा सवयसा सकायसा पागडे माणे णिग्गंथे महाणिज्जरे महापज्जवसाणे भवइ" तद्वृत्त्येकदेशो–यथा पूर्वोक्तस्थविरकल्पस्थितिप्रतिपन्नस्य विशिष्टनिर्जराकारणान्यभिधातु माह–तिहीत्यादि सुगमं नवरम्महतीनिर्जरा कर्मक्षयलक्षणा यस्य स तथा महत्प्रशस्तमात्यन्तिकं वा पर्यवसान पर्यंवः समाधिमरणतोऽपुनर्मरणतो वा जीवे तस्य यस्य स। तथा अत्यन्तं शुभाशयत्वादिति एवं **समणसत्ति** एवमुक्तलक्षणं त्रयं **स** इति साधुमणसत्ति मनसा ह्रस्वत्वं प्राकृतत्वादेव **सवयसत्ति** वचसा **सकायसत्ति** कायेनेत्यर्थः, सकारागमः प्राकृतत्वादेव त्रिभिरपि कारणैरित्यर्थः। अथवा स मनसेत्यादि प्रधारयम् तत्पर्यालोचयन् क्वचित् पागडे **माणोत्ति** पाठस्तत्र प्रकटयन् किञ्चित्पाठार्थः प्रोच्यते, तिहिं ठाणेहिं इति त्रिभिः स्थानकैः श्रमण निर्ग्रंथः, **महानिज्जरे** इति महती कर्मक्षपणा, **महापज्जवसाणे** इति महत्पर्यवसानं समाधिमरणमि त्यर्थः कुर्यादिति। यतः पुनर्मरणाऽभावात्, पुनर्मरणाऽभावो हि सिद्धिपदप्राप्ते एव स्यात, अत एव महदन्तः इति महत्पर्यवसानं भवइ इति भवति कुर्यादित्यर्थः। कयाणं अहमिति कदा अहं अप्पं वा बहुं वा **सुयमिति** अल्पं वा बहुं वा अहं श्रुतं, **अहिज्जिस्सामि** इति अधीष्ये इति चिन्तयन् साधुः कर्मणः महानिर्जरां करोतीति साधूनां प्रथमो मनोरथ. ॥ १ ॥ तथा कयाण **महमेकल्लविहार पडिमं** पज्जित्ताणं विहरिस्सामि इति कदा अहं द्रव्यभावत एकलविहारिणः प्रतिमामङ्गीकृत्य विचरिष्यामि, तत्र द्रव्यत एककः अन्यसाधुसहायाऽभावात्, भावतस्तु:

तृतीयमनोरथस्तु साधुमनोरथवद्विज्ञेयो यथा "कयाणं अपच्छिममारणंतियसंलेहणा झूसणा झूसिए भत्तपाणपडिया इक्खिए पाओवगए कालमणवकंखमाणे विहरिस्सामि ?" तत्पाठार्थोऽपि सुगमं पूर्ववत् साधूनां तृतीयमनोरथवदर्थो विज्ञेय इत्यर्थः । इति स्थानाङ्गसूत्रे तृतीयस्थानकेऽपि साधूनां मनोरथत्रये, श्रुतपठनमनोरथो निगदितः, परं श्रावकाणां मनोरथत्रये सूत्रपठनमनोरथस्तीर्थङ्करैर्नोक्तस्तद्धेतुना योगोद्वहनकर्तृभिः साधुभिरेव सूत्राणि संपठनीयानि इति सुस्थं । तथा श्रीउत्तराध्ययनसूत्रे त्रयोदशाध्ययने ब्रह्मदत्तचित्रमुनिप्रश्नोत्तराधिकारेऽपि साधूनां सूत्रपठनं प्रोक्तं, तथा च तत्पाठ–गाथा । " महत्थ रूवावयणप्पभूया, गाहाणुगीआनरसंघमज्झे । जभिक्खुणो सीलगुणोववेआ, इह ज्जयंते समणोम्हिजाओ ॥ १२ ॥ " एतत्पाठवृत्तौ यदुक्तं श्रीतपगच्छीयमहोपाध्यायविमलहर्षगणि महोपाध्यायश्रीमुनिविमलगणि शिष्यो पाध्यायश्रीभावविजयगणिभिस्तत्पाठो यथा–ब्रह्मदत्तश्चित्रमुनिं प्राह–यदि तवाप्येवं विधा सम्पदभूत्तदा कथं प्रव्रजित ? इत्याह–" महत्थरूवा वयणप्पभूया गाहाणुगीआ नरसंघमज्झे । जं भिक्खुणो शीलगुणोववेआ इह ज्जयंते, समणोम्हि जाओ ॥ " महार्थरूपा अनन्तद्रव्यपर्यायात्मकतया बह्वर्थस्वरूपा वचनेनाप्रभूता वचनाप्रभूता स्वल्पाक्षरेत्यर्थः । कासौ गीयते इति गाथा सा चेहार्थाद्धर्माभिधायिनी सूत्रपद्धतिः अनुलोमं श्रोत्रानुकुलं गीता कथिता अनुगीता, अनेन श्रोतुरनुकुलैव देशनाकार्येति ख्यापितं भवति । केत्याह नरसङ्घमध्ये, न तु कोणके प्रविश्येति भावः । यां गाथां श्रुत्वेति शेषः, भिक्षवो मुनयः शीलं चारित्रं गुणो ज्ञानं ताभ्यांमुपपेता शीलगुणोपपेताः, इह जिन प्रवचने यतन्ते यत्नवन्तो भवन्ति, सोपस्कारत्वात्सूत्रस्य सामयापि श्रुता ततः श्रमणोस्म्यहं जातो न तु दुःखदग्धत्वादिति भाव, इति सूत्रत्रयार्थः १२ इति श्रीउत्तराध्ययनसूत्रवृत्तिवचनात् साधुभिरेव सूत्रं पठनीयमित्यागतं, तत्रापि कालग्रहणादियोगक्रियाकारकैर्नान्यैरिति गम्यं, तर्हि श्रावकाणां तु का कथा ? । तथा निशीथसूत्रे तु यः साधुः गृहस्थस्यस्य वर्गस्य सूत्रं पाठयति तस्य साधोश्चतुर्मास प्रायश्चित्तमायातीति प्रोक्तं । तथा च निशीथसूत्रपाठः " से भिक्खुअण

चत्थियं गारत्थियं वा वाएइ वायं तं वा साइज्जइ तस्स णं चाउम्मासियमित्यादि " एतत्पाठ शब्दार्थो यथा से भिक्खु इति यः साधुः अणउत्थियं वेति अन्ययूथिकस्य परतीर्थिकस्य मिथ्यादृष्टेरिति यावत्, गारत्थियं वेति गृहस्थस्य श्रावकस्येति यावत्, वा पुनरर्थे, वाएइ इति वाचनां ददाति, वायं तं वासाइज्जइ इति वाचनां ददतां साहाय्यं कुर्यात्, तस्तस्य तस्य साधोः चउमासियमिति चतुर्मासिकं प्रायश्चित्तं लगतीति निशीथसूत्रस्यैकोनविंशतितमोद्देशके मोक्तं जिनेश्वरैरिति । अत्र केचिदागमकला विकला बालिशा तुच्छाकाः प्रजल्पन्ति, अत्र गृहस्थास्तु अन्यतीर्थगता अवसेयाः न तु जैनधर्मिणो गृहस्थाः, तेषां तु सूत्रं पाठ्यमिति । अत्र प्रतिवचनं, भो लुम्पाक ! एतदपि तव विचारणाकुशलकलाविलसितं, यतोऽत्र पाठेऽन्ययूथिका गृहस्थाः प्रोक्ता भवेयुस्तर्हि अणउत्थियमिति पाठे सर्वे मिथ्या दृष्टयः समागता एव, तत गारत्थियमिति पाठः कथं पुनः प्रोक्तः ? तथा वाकारद्वयमस्ति, तद्वाकारद्वयस्य कोऽर्थो भावीति एवं सति तु वाकारद्वयस्य नैरर्थक्यापत्तिः । तथा पुनरुक्तदोषापत्तिर्भविष्यति । अत्र त्रिरभिधानं पुनरुक्तमिति काव्यानुशासनकर्त्तौ श्रीहेमचन्द्रसूरयः, एवं तु तादृक् पुनरुक्तादिदोषानामप्रज्ञान एवैतेषां मूढा व्याकरणादिशास्त्रविकला लुम्पाका कुतो जानन्ति ? अपि तु न जानन्त्येवेत्यलं विस्तरेण । अत्र निशीथसूत्रे मिथ्यादृष्टीनां गृहस्थानां च यः साधुर्वाचनां ददाति, तस्य चतुर्मासिकं प्रायश्चित्तमित्युक्तं जिनैरिति, तत्कारणात् जिनाज्ञा परिपालकाः श्रावकास्तु नहि जैनागमं पठन्ति वाचयन्ति च, जैनागमे दि श्रावकाणामागमवाचननिषिद्धत्वादिति विशेषार्थः ॥

इति श्रीमत्पन्न्यासदयाविमलजिच्छिष्यपंन्यासश्रीसौभाग्यविमलजिद्विनेयपन्न्यासमुक्तिविमलेन विरचितायां स्वोपज्ञागमवाचन मीमांसायां श्रीचतुर्दशकाव्यार्थः ॥ १४ ॥

सिद्धान्तोत्करपाठनेऽपि गृहिणां कामं यतीनां स्फुटं,
पायश्चित्तमुदीरितं तदपि यश्चोल्लङ्घ्यं संपाठयेत् ।
ओकःस्थान् स निजेन्द्रियायतनकोद्भूतोग्रकण्डूक्षये,
बालानां मुकुटः प्रघर्षति तनौ चण्डात्मगुप्तां खलु ॥ १५ ॥

अथ पञ्चदशकाव्यन्याख्यामाह । अत्र पञ्चदशे काव्ये सिद्धान्ते गृहस्थवर्गस्य सूत्रपाठने चतुर्मासप्रायश्चित्तं साधोर्भवति, तत्सूत्रपाठमवगणय्य श्राद्धानामागमपाठं पाठयति सहि मूर्खशेखर, इति दर्शयन्नाहः—सिद्धान्तोत्करपाठनेऽपीति गृहिणां गृहस्थवर्गस्य सिद्धान्तानामागमानां पाठनेऽध्यापनेऽपि विस्मये यतीनां गृहस्थवर्गस्य सूत्रमध्यापयितॄणामिति गम्यं, काममत्यन्तं स्फुटं प्रकटं प्रायश्चित्तं उदीरितं प्रोक्तं तीर्थङ्करैरिति शेषः । तदपीति तत्सूत्रवचनमपि उल्लङ्घ्येति समुल्लङ्घ्य अवगणय्येति यावदोकसि गृहे तिष्ठतीति ओकःस्थाः तान् यः साधुः सम्पाठयेत् सूत्रपाठं पाठयेत्, सूत्रपाठमवगणय्य गृहस्थवर्गस्य, सूत्रपाठपाठकः यः साधुरित्यर्थः,, सहि कीदृश ? इत्याह—खलु निश्चये स बालानां मुकुटः बालानां जडानां मुकटो मुकुटतुल्यः मूर्खशेखर इत्यर्थः । तथा स साधुः किं कुरुते ? इत्याह—निजे स्वकीये इन्द्रियाणां चक्षुरादीनामायतनमिन्द्रियायतनं स्वार्थे कप्रत्ययः शरीरमिति यावत् तस्मिन् शरीरे उद्भूता समुद्भूता उग्रा कठोरा या कण्डूः कडूयनं कण्डूः कण्डूयनं खर्जूः कण्डूया इत्यभिधान चिन्तामणि वचनात् "खरज" इति लोकप्रसिद्धं तस्याः क्षये विनाशने स्वतनूद्भूतोग्रखर्जू क्षये इत्यर्थः । तनौ स्वशरीरे चण्डात्मगुप्तां प्रचण्डां आत्मगुप्तां कपिकच्छूं प्रकर्षेण घर्षति, हास्यवचनं चेद्, तत्रात्मगुप्ता कपिकच्छूः "कौचफल" इति लोकप्रसिद्धं यदुक्तमभिधानचिन्तामणौ चतुर्थकाण्डे—कपिकच्छूरात्मगुप्ता इति आत्मना गुप्ता आत्मगुप्ता स्पर्शाऽविषयत्वा-

दिति वृत्तौ । तथाऽमरकोशेऽपि, वनौषधि वर्गे "आत्मगुप्ता जहाऽव्यण्डा कण्डूरा प्रावृषायणी ऋष्य प्रोक्ता शूकशिम्बिः कपिकच्छूश्च मर्कटी ॥ १ ॥" एतानि नवनामानि मर्कट्याः कवांच इति ख्यातायाः तदुहृत्यैकदेशो यथा आत्मेति आत्मनो गुप्ता दुःस्पर्शत्वादित्यमरकोशवृत्तौ, एतादृशः कः मूर्खो भवति ? यः स्वशरीरोत्पन्न कण्डूशमनाय कपिकच्छूं घर्षति, कपिकच्छूस्तु प्रत्युत कण्डूरहिते शरीरे बहुखर्जूकारका, तत एतादृक्षः मूर्खो भवति ? यः अनन्त संसारभ्रमणोपार्जितकर्मणां विनाशनार्थं जिनाज्ञायाः स्पन्दनं कुर्यात्, जिनाज्ञा स्पन्दनं तु प्रत्युतकर्मणां संसारस्य च वृद्धि हेतुः, उक्तञ्च । "आसायणमिच्छत्तं, आसायण वज्जणाओ सम्मत्तं, कुणइ दीहं च संसारम्" ॥१॥ इति काव्यसम्बन्धार्थः ॥

विशेषार्थस्त्वयं—यथागमकलाविकलः लुम्पाककसायः श्रावकाणामागमवाचनपठनं प्रभुते, सहि मूर्खशेखरो मूर्खाणां मुख्यो ज्ञेयः । कथमिति चेदुच्यते सर्वेषु जैनशास्त्रेषु श्रावकाणामागमवाचनपठननिषिद्धत्वात् । निशीथसूत्रे तु गृहस्थवर्गस्य वाचनां ददतां साधूनां चतुर्मासिक प्रायश्चित्तमुक्तं, तर्हि एतादृगागमपाठानवगणय्य निजमात्यानां जिनाज्ञा परिपालकत्वं प्रभुते, स मूर्खशेखरः, सिद्धान्तपाठोत्थापने एव जिनाज्ञा सम्भिवेति । दृष्टान्तमाह—यथा कश्चिन्मूर्खः स्वकीये शरीरे कण्डूयने जाते तत्कण्डूपशमनाय कपिकच्छूघृष्ट्वा, ततो बहुकण्डूर्जाता, तत्पीडया पूत्कारं करोति, तदाकर्ण्य तत्समीपे लोकामीलितास्तैः पृष्टं, भो ! तव किं जातं तेनापि निजकृतमुक्तं, ततो लोका विहस्य प्रोचुः भो मूर्ख ! एतत्त्वया क्वापि श्रुतं, यदात्मगुप्तया शरीरकण्डूयनं विनाशितमिति, आत्मगुप्ता तु प्रत्युतबहुकण्डूयनकारणा इत्युक्त्वा तदुपचारेण कण्डूविनाशं विधाय लोकाः स्वस्वस्थानं ययुरिति । तत एतादृक्षो मूर्खो भवति, यः पूर्वोपार्जितपापकर्मणामुच्छेदनार्थं तीर्थङ्कराज्ञायाः स्पन्दनं कुर्यादिति । जिनागमकलाकलनकुशलाः पण्डितास्त्वेवं न कुर्युरित्यर्थः । अथ कश्चिदागमकलाकलापच्छम्पाकः लुम्पाकमती प्राह—ननु स्वयमेव सूत्रं वाचयित्वा कोऽपि सूत्रपाठं पठेत्, तस्मिन् को दोषः ? इति । अथ तन्मतिरचने कैतवकलाविलसितं, यत श्रीअनुयोगद्वारसूत्रे सूत्र गुरुवाचनया समागतमिति प्रोक्तं, तथा च तत्पाठः । "जस्सणं आवस्स एचि पद सिक्खितं ठितं जितं मितं परिजितं नामसमं घोससमं अहीण

क्खरं अवाइद्धक्खरं अक्खलिअं अमिलिअं अवच्चामेलिय पडिपण्ण पडिपण्णघोसं कंठोट्ठविप्पमुक्कं गुरुवायणोवगयमित्यादि" यदुक्तमेतत्पाठ वृहद्वृत्तौ श्रीहेमचन्द्रसूरिभिस्तत्पाठो यथा—तत्रादित आरभ्य पठनक्रियया यावदन्तं नीतं तच्छिक्षितमुच्यते, तदेवाविस्मरणश्चेतसि स्थितं स्थितत्वात् स्थितमप्रच्युतमित्यर्थः, परावर्त्तनं कुर्वतः परेण वा क्वचित् पृष्टस्य यच्छीघ्रमागच्छति तज्जितं, विज्ञातश्लोकपदवर्णादिसंख्यमितं, परिसमन्तात्सर्वप्रकारैर्जितं परिजितं परावर्त्तनं कुर्वतो यत्क्रमेणोत्क्रमेण वा समागच्छतीत्यर्थः, नाम अभिधानं, तेन समं नामसमं इदमुक्तं भवति यथा स्वनाम कस्यचित्स्थितं जितं मितं परिजितं भवति, तथैतदपीत्यर्थः—घोषा उदात्तादयः तैर्वाचनाचार्याभिहित घोषैः समं घोषसमं यथा गुरुणा अभिघोषास्तथा शिष्योपि यत्र शिक्षते तत्र घोषसममिति भावः। एकद्व्यादिभिरक्षरैर्हीनं हीनाक्षरं, न तथा अनत्यक्षरं अवाइद्धक्खरंति विपर्यस्त रत्नमाला गतरत्नानीव विद्धानि विपर्यस्तान्यक्षराणि यत्र तद्व्याविद्धाक्षरं न तथाऽव्याविद्धाक्षरं, अव्वाइद्धमिति क्वचित्पाठस्तत्रापि व्याविद्धाक्षरयोगाद्व्याविद्धं न तथाऽव्याविद्धं, उपलशकलाद्याकुलभूभागे लांगलमिवस्खलति यत्तत्स्खलितं न तथाऽस्खलितं, अनेक शास्त्रसम्बन्धीनि सूत्राण्येकत्र मीलयित्वा यत्र पठति तदमीलितं असदृश धान्य मेलकवत्, अथवा परावर्त्तमानस्य यत्र यदादिविच्छेदो न प्रतीयते तन्मीलितं, न तथाऽमीलितमेकस्मिन्नेव शास्त्रेनान्यस्थाननिबद्धान्येकार्थानि सूत्राण्येकत्रस्थाने समानीयपठतो इत्याम्रेडितं, अथवा आचाराङ्गादिसूत्रमध्येमतिचर्चितानि तत्सदृशानि सूत्राणि कृत्वा प्रक्षिपतो व्यत्याम्रेडितं, अस्थानविरतिकं वा व्यत्याम्रेडितं न तथाऽव्यत्याम्रेडितं। सूत्रतो विन्दुमात्रादिभिरनूनमर्थतस्त्वध्याहाराकाङ्क्षादिरहितं प्रतिपूर्णं, उदात्तादिघोषैरविकलं प्रतिपूर्णघोषं, अत्राह—घोष सममिति शिष्याकालमधिकृत्योक्तं, प्रतिपूर्णं घोषन्तुं परावर्त्तनादिकालमधिकृत्येति विशेषः, कण्ठश्चौष्ठश्च कण्ठोष्ठमिति प्राण्यं गत्वात्समाहारस्तेन विप्रमुक्तं कण्ठोष्ठविप्रमुक्तं, वालमूकभाषितवद्यदव्यक्तं न भवतीत्यर्थः। गुरुप्रदत्तया वाचनया उपगतं प्राप्तं गुरुवाचनोपगतं, न तु कर्णाघाटकेन शिक्षितं न वा पुस्तकात् स्वयमेवाधीतमिति भावः। इति श्रीअनुयोगद्वारसूत्रवृत्तिवचनात् गुरुवाचनया सूत्रं पठनीयमित्युक्तं।

तथा निशीथसूत्रेऽपि गुरुवाचनां विना यः साधुः सूत्रपाठं पठति, तस्य प्रायश्चित्तमुक्तं तथा च तत्पाठः । "आयरिय उवज्झायाणं अदिण्णं गिरं आइयइ आयायंतं वा साइज्जइ इत्यादि तत्पाठशब्दार्थो—यथा यः साधुः आचार्योपाध्यायाभ्यामदत्तां गिरमिति वाणीं आइय इति गृह्णीयात्, अथवा तस्य साहाय्यं कुर्यात्तस्य प्रायश्चित्तं लगति, इत्यत्र निशीथसूत्रेऽपि स्वयमेव सूत्रपठने प्रायश्चित्तं प्रोक्तमिति। तथा श्रीनन्दीसूत्रवृत्तौ, श्रीआचाराङ्गसूत्रवर्णनाधिकारेऽपि यदुक्तं मलयगिरिसूरिभिस्तथा च तत्पाठ । "विचित्रार्थनिबद्धानि हि सूत्राणि भवन्ति अत एव तेषां सम्यगर्थाधिगमो गुरूपदेशतो भवति नान्यथा चाह चूर्णिकृत् । " दो सुयखंधा पणवीसं अज्झयणाणि एवं आयारग्ग सहियस्स आयारस्स पमाणं भणियं अट्ठारसपयसहस्सा पुण पढम सुयखंधस्स नवबंभचेरमयस्स पमाणं विचित्त अत्थ निबद्धाणि य सुत्ताणि गुरूवएससओ सिं अत्थो जाणियव्वोत्ति" । इति नन्दीसूत्रवृत्तावपि गुरूपदेशत एव सूत्रार्थौ साधुभिः ग्राह्यः, न तु स्वयमेवेत्युक्तं । साधूनामपि स्वयमेव सूत्रपठने जिनाज्ञाया भङ्गापत्तिर्भवति, जिनाज्ञामूलोऽयं "आणाए धम्मो" इति सिद्धान्ते प्रोक्तत्वात् इत्यादि। सिद्धान्तेषु श्रावकानामागमवाचनं निषिद्धं, परं तादृक् सूत्रपाठान् कुर्वन्ति ये कुमतिव्युद्ग्राहिता प्राणिनो ना कथं मन्यन्ते ? अत एव श्रीस्थानाङ्गसूत्रे तृतीयस्थाने भिन्नधरा प्राणिनो दुष्प्रतिबोध्या स्तीर्थङ्करैः प्रोक्तास्तथा च तत्पाठ । "तओ दुसण्णप्पा पण्णत्ता, तं जहा दुट्ठे मूढे वुग्गाहिए ।" इत्येतत्पाठवृत्तौ यदुक्तं श्रीअभयदेवसूरिभिस्तद्यथा इदानीं सम्यक्त्वस्याप्ययोग्यानाह—तओ इत्यादि कष्टेन किन्तु दुःखेन कष्टेन संज्ञाप्यन्ते प्रज्ञाप्यन्ते बोध्यन्त इति दुःसंज्ञाप्यास्तत्र दुष्टो द्विष्टस्तत्त्वं प्रज्ञापकं वा प्रति सचाप्रज्ञापनीयो द्वेषेणोपदेशाप्रतिपत्ते रेव मूढो गुण दोषानभिज्ञ व्युद्ग्राहित प्रज्ञापकप्रतीकूलविपर्यास सोऽप्युपदेशं न प्रतिपद्यते, उक्तञ्च । "पुव्वं वुग्गाहिया केइ नरा पंडियमाणिणो णेच्छंति कारणं सोउं दीवजाए जहा नरेत्ति ॥ १ ॥ एतेषां च स्वरूपं कल्पात्कथाकोशाख्यानसेयमिति । एतद्वृत्तिगतगाथा व्याख्या यथा—पूर्वं व्युद्ग्राहिताः केचिन्नराः पण्डितमानिनो नेच्छन्ति कारणं किञ्चित् श्रोतुं द्वीपजातो यथा नर इति गाथार्थः । द्वीपजातो नरो यथा एको वणिक् तस्य

भार्याऽतीव दृष्टा तेन पोतव्यवहारे गन्तुं कामेन साऽमच्छितयोक्तमहमपि सहागच्छामि, तेन सा सहनीता, सा च गुर्विणी, समुद्रमध्ये विनष्टं यानपात्रं, फलकं विलग्ना, अन्तरद्वीपे प्राप्ता तत्रैव मसूतादारकं, स वणिक् मृतः समुद्रे, सा च यौवनं प्राप्तं स्वपुत्रमेव सम्पलग्ना, तया च स व्युद्ग्राहितः, यदुत, यदा मनुषमीक्षेथाः तदा नश्येः, ते मनुष्यरूपेण हि राक्षसा इति। अन्यदा दुर्वातभग्नपोताः केचनवणिजस्समागतास्स तान् दृष्ट्वा नश्यति तैर्ज्ञातं, अयं व्युद्ग्राहितः केनापि कथमपि पृष्टस्तेन सर्वं मत्यपादितैरुक्तं त्यज महापापं बहूक्तोऽपि पूर्वं मात्राप्युद्ग्राहितत्वेन मानितं तद्वचन। एवं यः कुमवचनव्युद्ग्राहितः, स्वं पण्डितमन्यो न मन्यते किमपीत्यर्थः। इति स्थानाङ्गसूत्रवचनात् कुमति व्युद्ग्राहिताः पुरुषा अपि दुर्वोध्यास्तर्हि कुमतिनां तु का कथेति ?, तथैव कगुरुभ्रामितानां पुंसां सुगुरुवचनेषु विश्वासो न स्यात्, यतः "उन्मार्गे पातिताः पापैः सत्सु सन्मार्गदर्शिषु पश्यता भ्रामिता अन्धा इव कुप्यन्ति देहिनः ॥१॥" तथाहि नालाकल्पे पुरे सुरसेननामा राजा बधिरपङ्गुमूकादीनामाजीविका सुकरा परमंधानां च दुष्करेति मत्वा स पटहवादनपूर्वमन्धानां पञ्चशतीं मेलयित्वा तेषामशनवसनादि यद्विलोक्यते तत्मयच्छति, भूपमानितत्वेन पौरैरपि ते सर्वेऽप्यन्धा भूपवत्सत्क्रियन्ते स्म। इतस्ततो गच्छतामस्माकं दुष्करमिति ध्यात्वा क्रमेण सधनैस्तैरेकः पश्यन् पुमान् सेवकत्वेन रक्षितः। राजसेनपुराधीशो राजचन्द्रो राजा गताक्षाणां भोजनादिमत्यहं मत्येकं चैकं सुवर्णं दत्ते, अतः सर्वेऽपि भवन्तस्तेनाकारिताः सन्तीति तेन धूर्त्तेनान्यदा कूटलेखवाचनपुरस्सरं वञ्चिताः छिधाप्यन्धास्तेऽप्येनं पुरस्कृत्य तत्कर दत्तवित्ता राजसेनपुरं मत्यचलन्। अथारण्यं प्राप्तास्ते तेनोचिरे, इतो भृशं विषमेपथिभोजनादि न लभ्यते, तेन भवतां कृते यावत्पाथेयमानयामि तावद्भवन्तोऽस्मिन् सरले पथिव्रजन्तु, यदि च कोऽपि वक्ति भवन्तो मार्गभ्रष्टास्तदा स तस्करः मस्तरैर्मारणीय, इति शिक्षां दत्वा तत्र गिरेः मदक्षिणावृत्त्या पर्यटनस्तान् कृत्वा च गते तस्मिन् धूर्त्ते तथैव भ्रमन्तस्ते यूयं मार्गभ्रष्टा इति केनापि पथिकेनोक्तास्ते चौरोऽयमिति तं पाषाणैर्घ्नन्ति स्म। एवमन्येनापि केनाप्यभिहितास्तं मस्तरैर्घ्नन्तस्ते क्षुत्पिपासा पीडिता मृत्वा नरकं ययुः। इति कुगुरुभ्रामितानां न सगुद्-

स्वचसि विन्यास। इति पञ्चमलगवाक्षोदाहरणं। इत्यादि बहवो दृष्टान्ताः सन्ति, ते तु स्वयमेव विज्ञेया। अत्र तु ग्रन्थ गौरवभयान्न प्रोक्ताः, मघेष स्थानाङ्गे तृतीयस्थाने समेव भिमकाराः माषिनः सुपोष्याः प्रोक्तास्तयथा—"तओ सुसण्णप्पा पण्णत्ता, तं जहा—मदुट्ठे अमूढे अवु-ग्गाहिए" एवद्वृत्त्येकदेशो यथा—एवद्विपर्ययस्थान् सुसंज्ञाप्यतयाऽप्याह। तओ इत्यादि स्फुटमिति वक्ताः मज्ञापनार्हाः गुरुपा इति। तत्त्व-म्यार्थोऽपि सुगमं इत्यादि भाक्तानामागमवाचन निषेधरूपमयुक्तमपाठपेटव्याकर्ण्य, तीर्थङ्कराज्ञा परिपाकका' श्रावकास्तु जैनागमं नहि पठन्ति वाचयन्ति च, जैनागमेषु भाक्तानामागमवाचननिषिद्धत्वादिति विशेषार्थः ॥

इति श्रीमत्पन्यासदयाविमलशिष्यशिष्यपन्यासश्रीसौभाग्यविमलशिष्यविनेयपन्यासमुक्तिविमलेन विरचितायां स्वोपज्ञाऽऽगमवाचन-मीमांसाख्यो श्रीपञ्चदशकाव्यार्थः ॥ १५ ॥

यो योगोद्वहन विधाय गुणवान् साधुर्घृणा धारको-
ऽस्वाध्यायं च विहाय सूत्रपठने भाषा गुरोर्वाचना ।
सूत्रार्थं प्रथमं तथाऽन्यदुदितं निर्युक्ति मिश्रं पुन.,
निश्शेषं च ततस्तृतीयमनघं तं पाठयेत्सद्गुरु ॥ १६ ॥

अथ षोडशकाव्यव्याख्यामाह। अत्र षोडशेकाव्ये साधुना योगोद्वहनं विधाय अस्वाध्याय त्यक्त्वा गुरुः सूत्रवाचना ग्राह्या, तथा विधा प्रभुयोः पठेत् गुरुरपि सूत्रपाठं पाठयेदिति दर्शयन्नाह। यो योगोद्वहनमित्यादि यः साधुः गुणवान्, ज्ञानदर्शनचारित्रादिगुण युक्त., चकारः पुनरर्थे, तथा घृणाधारकः घृणां कृपां दयामिति यावत्, धरतीति धारकः, घृणाया धारकः घृणाधारकः, यत्तच्छब्दयोर्नि

त्राभिसम्बन्धत्वादत्र तच्छब्दोऽध्याहार्यः, तेन साधुना किं कार्यमित्याह—योगोद्वहनमित्यादि आगाढानागाढादियोगवहनं विहाय, कृत्वा, तथा अस्वाध्यायमिति "असज्झाइ" इति लोकप्रसिद्धं, तं विहाय त्यक्त्वा अस्वाध्याये सूत्रपाठनिषेधत्वात्, सूत्रपठने सूत्रपठनहेतवे गुरोः गुरुतः वाचना सूत्रवाचना साधुना ग्राह्याः, न तु स्वयमेव वाचना ग्राह्येति । अथ अनुयोगत्रिकमाह—सद्गुरुरिति सुगुरुः तं शिष्यं, कं पूर्वोक्तगुणं पाठयेत् सम्पाठयेदिति किं पाठयेदित्याह—प्रथमं पूर्वं सूत्रार्थं पाठयेत् अर्थाद्गुरुः शिष्याय यदा अर्थं ददाति तदा प्रथमतः शब्दार्थमात्रमर्पयति, तच्छब्दार्थं पठनानन्तरं, पुनः निर्युक्तिमिश्रं, तथा अन्यत इतरत् उदितं प्रोक्तं, चकारः पुनरर्थे ततस्तत्पठनानन्तरं निश्शेषं समस्तं कीदृशं ? अनघं निर्मलं पाठयेत् तृतीयवेलायां प्रसङ्गागत दृष्टान्तहेतु नयप्रमुखं सर्वं पाठयेदित्यर्थः । इति काव्यशब्दार्थः ॥

विशेषार्थस्त्वयं-ज्ञानदर्शन चारित्रादि गुणयुक्तेन साधुना योगोद्वाहं कृत्वा अस्वाध्यायं विहाय गुरुतो वाचना ग्राह्या । अत्र कश्चिद् निजकुमतपालनैकलालसः लुम्पाकमती प्राह—नन्वस्वाध्यायं विहाय साधुभिः सूत्रं पठनीयमिति कस्मिन् सूत्रे प्रोक्तमिति । अत्र प्रतिवचनमाह—भो लुम्पाक ! यद्येवं तर्हि, अस्वाध्यायाक्षराणि दृश्यन्ते, यथा श्रीस्थानाङ्गसूत्रे चतुर्थस्थानके प्रतिपत्तिथि चतुष्टये स्वाध्यायाऽविधानं प्रोक्तं। तथा च तत्पाठः। "णो कप्पइ णिग्गंथाणं वा णिग्गंथीणं चउहिं महापाडिवएहिं सज्झायं करेत्ता, तं जहा—आसाढपाडिवए, इंदपाडिवए, कत्तियपाडिवए, सुगिम्हपाडिवए, इति" तच्छब्दार्थो यथा—नो कल्पते निर्ग्रन्थानां निर्ग्रन्थीनां वा चतसृषु महाप्रतिपत्तिथिषु स्वाध्यायकरणं, तद्यथाऽऽषाढशुक्लपूर्णिमानन्तरागतप्रतिपत्तिथौ, तथा इन्द्रमहोत्सवसत्क प्रतिपद्दिने, आश्विनपूर्णिमानन्तरागतप्रतिपत्तिथिरित्यर्थः। तथा कार्त्तिकमासपूर्णिमानन्तरागतप्रतिपद्दिने, तथा चैत्रमासपूर्णिमानन्तरागतप्रतिपद्दिने, इत्येताः सर्वा अपि प्रतिपत्तिथयः कृष्णपक्ष सम्बन्धिन्योऽवसेया इति । तथा यदुक्तमेतत्पाठवृत्तौ श्रीअभयदेवसूरिभिस्तत्पाठो यथा । नो कप्पईत्यादिकं कण्ठ्यं, केवलं महोत्सवानन्तरवृत्तित्वेनोत्सवानुवृत्त्या शेषप्रतिपद्विलक्षणतया महाप्रतिपदस्तासु इह च देश विशेष रूढ्या "पाडिवए" इति निर्देशः, स्वाध्यायो नन्द्यादिसूत्र-

तथा पश्चिमसन्ध्यायां सूर्यास्तमयसमये द्विघटिकं यावत्, तथा मध्यरात्रौ द्विघटिककालं यावत्। इत्येतासु सन्ध्यासु स्वाध्यायो न कार्यः। तथा चोक्तं निशीथभाष्यपीठादौ गाथा। काले १ विणए २ बहुमाणे ३ उवहाणे ४ तह य निन्हवणे ५ वंजण ६ अत्थ ७ तदुभये ८ अट्ठविहो नाणमायारो ॥ १ ॥ इति तत्र काले सूत्रपौरुष्यां सूत्रं पठनीयं गणनीयं वा अर्थपौरुष्यां त्वर्थः उत्कालिकश्रुतादिकं वेति, कालिकं श्रुतमुत्तराध्ययनाऽऽचाराङ्गादिकं, दिवारात्रौ च प्रथमचतुर्थपौरुष्योरेव। तथोत्कालिकं तु दशवैकालिकादिकं दृष्टिवादश्च सर्वासु पौरुषीषु पठनीयमिति। तथा यदीह दिवसनिशाद्यन्तपौरुषीद्वये एवाऽस्वाध्यायोऽभावे पठ्यते तत्कालेन निवृत्तं कालिकं ॥ १ ॥ कालवेलावर्जं यत्पठ्यते तदुत्कालिकं २ कालिकोत्कालिकयोरुभयोरप्यनध्यायकालो लघुघटीकाद्वयद्वयप्रमाणः प्रत्यहोरात्रं च चतस्रः कालवेलाश्च परिहार्याः। यदुक्तं निशीथसूत्रे एकोनविंशोद्देशके। तथा च तत्पाठः—"जे भिक्खु चउहिं संज्झाहिं सज्झायं करेइ करंतं वा साइज्जइ, तं जहा पुव्वाए संज्झाए पच्छिमाए मज्झण्हे अड्ढरत्तेत्ति"। तत्पाठार्थो यथा यो भिक्षुश्चतसृषु सन्ध्यासु स्वाध्यायं करोति कुर्वन्तं वा सारयेत् श्रेष्ठं ज्ञात्वाप्रेरयेत्, अनुमोदयेद्वेत्यर्थः। तद्यथा पूर्वस्यां, सन्ध्यायां, पश्चिमायां, मध्याह्ने अर्द्धरात्रे चेति। तथा निशीथचूर्णिसिद्धान्तेऽप्युक्तं "संज्झा चउत्ति अणुदिए सूरिए मज्झण्हे अत्थमणे अड्ढरत्ते एआसु चउसु सज्झायं न करेंति इति" तच्छब्दार्थो यथा—सन्ध्याश्चतस्र इति, अनुदिते सूर्येमध्यान्हे, अस्तमिते, अर्द्धरात्रे, एतासु चतसृषु स्वाध्यायं न कुर्वन्ति इति। तथा निशीथसूत्रे पञ्चमोद्देशकेऽपि वसतिमाश्रत्य प्रोक्तं—तथाहि "जे वासइज्जइ," तच्छब्दार्थो यथा—ये स प्राभृतिकां शय्यामनुप्रविशति अनुप्रविशंतं वा सारयेदिति। अत्र भाष्यं तथाहि। पुव्वण्हे अवरण्हे सूरंमि अणुग्गएव अत्थमिए मज्झण्हे अवसहीसे से काले पडिकुट्ठा ॥ १ ॥" तच्छब्दार्थो यथा—पूर्वाह्नेऽपराह्ने सूर्येऽनुद्गते चास्तमिते मध्याह्ने इति वसतिः शेषे काले प्रतिकुष्टा निषिद्धेत्यर्थः। तथैतच्चूर्णिर्यथा—"जासुतत्थ पोरिसि वेलाए पाहुडिआ किज्जइ सा वाघाइमा छिण्णकाले निवाघाइमा पुवह्ने गाहा पुवह्ने जा अणुग्गए सूरिए अवरह्ने जा अत्थमिए सूरिए मज्झण्णे कालवेलाए अत्थ पोरिसि उद्धिआणा" तच्छ-

न्दार्थो यथा या सूत्रार्थपौरुषी वेलायां प्रभृतिका क्रियते सा स्वाध्यायादवता तस्य च कालिमासणो इति सूत्रेण तस्य क्रिया आदेशः चित्रस्फकाले निर्व्यापितवता पूर्वाह्ने गाया पूर्वाह्ने या अनुद्गते सूर्येऽपराह्न या अस्तमिति सूर्ये मध्याह्ने कालवेलायां अर्धपौरुषी उत्थिताऽऽज्ञा इति अत्र कल्पसूत्रौ व्यास्यैव एतेषु कालेषु यस्यां प्राभृतिका क्रियते सा यतस्थिरनुज्ञाता सूत्रार्थव्याघाताऽभावात् शेषे उद्गतसूर्यादौ काले यस्यां प्राभृतिका विधीयते सा प्रतिकुष्टा न कल्पते तस्या यस्तु सूत्रार्थव्याघातसम्भवात्, प्राभृतिका छगणलेपनादिरूपा। व्यवहारवृत्तावपि प्रोक्तं— "चतसृ सन्ध्यासु न कीरइंति" चतस्र सन्ध्या' तिस्रो रात्रौ, तद्यथा—अस्थिते सूर्ये, अर्धरात्रे, प्रभाते, च चतुर्थी सन्ध्या तु दिवसमध्यभागे, एतासु चतसृष्वपि निरन्तर स्वाध्यायो न क्रियते इति। शेषक्रियाणां प्रतिलेखनादिकायां तु न प्रतिनिषेध'। अत्राऽऽचरणया तु रात्रौ द्वे कालवेले, मध्यरात्रे रात्र्य ते च खरतरजिनदत्तसूरिकृते सन्देहदोलावली ग्रन्थेऽप्येवमुक्तं—तथा च तत् पाठः गाथा। चउ पोरसो दिवसो दिणमज्झंते अदुन्निघडिआओ एवं रयणीमज्झे अंतेमिम ताओ चत्तारि ॥१॥ तत्पाठार्थो यथा—चतुः पौरुषिको दिवस दिनमध्यान्तयोश्च द्वे घटिके एवं रजन्याः मध्ये अन्ते च तास्तस्रः इति इदमैदंपर्य आगमाभिप्रायेण सायमस्तमिते सूर्ये कालवेला आचरणानुसारेण तु सूर्यास्तसमयात् प्राक् सम्यक्निर्णयन्तु सम्यग् ज्ञानिन एव विदन्ति। एवं सिद्धान्तोक्तकालं मुक्त्वा, अकाले वर्षादिना पठनगुणनादाज्ञाभङ्ग ज्ञानाचारविराधनादि दोषैः प्रायश्चित्तमकालस्वाध्यायकारित्वेन प्रमत्तत्वात् दुष्टदेवता च्छलनादिकं च तथा चोक्त निशीथभाष्ये गाथा। "पुव्वावरसंझायं, जो कुणइ आणमाइणि(१)॥१॥ लोएवि होइ गरिहा सव्वासुचउसुमगायविचरति आवासगउवओगो आसासो चेव सिक्खाण ॥ २ ॥ कामं सुओवओगो तवोवहाण अणुत्तरं भणियं पडिसेहियम्मि काले तहा वि खलु कम्मबंधाय ॥ ३ ॥ तच्छब्दार्थो यथा पूर्वापरसन्ध्यायां मध्याह्ने तथा च अर्धरात्रे चतसृषु सन्ध्यासु स्वाध्यायं यः करोति आज्ञादीनि विराधितानि भवन्तीति ज्ञेयं ॥ १ ॥ लोकेऽपि भवति गर्हा निन्देत्यर्थः सन्ध्यासु तु गुह्यकाश्च विचरन्ति, आवश्यकोपयोगः आसासा एव शिक्षानामिति २ कामं श्रुतोपयोगस्तप उपधान

मनुत्तरं भणितं, प्रतिषेधिते काले तथाऽपि खलु कर्मबंधाय भवति २ इत्यादि। तथा लोकेऽपि क खवेलायां सन्ध्यावन्दनवैश्वदेवतर्पण होमादिक मार्गः शान्तिककर्मैवोक्तं। यतः द्विजानां प्रतिदिनं तिसृभिःसन्ध्याभिश्चतुर्विंशत्यधिक त्रिशत णो गायत्रीमन्त्र प्रत्यहं पूर्णीकार्यः इत्युक्तं परं न तु स्वाध्यायकरणं प्रोक्तं, तस्य परमतत्त्वात्मकत्वेन दुष्टवेलायां सर्वत्र सूत्रादि पठनगणनप्रतिनिषिद्धत्वादिति। यदुक्तं लौकिकैरपि चत्वारिखलु कर्माणि, सन्ध्याकाले विवर्जयेत्। आहारं मैथुनं निद्रां, स्वाध्यायं च विशेषतः ॥ १ ॥ आहाराज्जायते व्याधिः, क्रूरगर्भश्च मैथुनात्। निद्रातो धननाशश्च, स्वाध्यायान्मरणं भवेत् ॥ २ ॥ ततः सन्ध्यासु स्वाध्याये लोकेऽपि निन्दा भवति, अहो एते साधवः सर्वज्ञपुत्रत्वमात्मनि ख्यापयन्तोऽप्येतावदपि स्वाध्यायकालं न जानन्तीति लोकेऽपि गर्हा स्यात्। तथा सन्ध्यासु सूत्रपठनादि स्वाध्यायव्यग्रत्वे मुमुक्षोरवश्यकार्ये प्रतिक्रमणादौ शुद्धश्राद्धस्य त्रिकालदेववन्दनपूजाऽऽवश्यकादवनुपयोगित्वं स्यात्, यथोक्तकालक्रिया भ्रष्टत्वं स्याच्च तत्स्वाध्यायाऽकरणे तु तत्राऽऽवश्यकाऽर्चनादावुपयुक्तत्वं, तथा निरन्तरस्वाध्यायखिन्नानां विश्रामस्तदा स्यात् विशेषकारणैस्तु कालव्यत्ययेऽपि न दोषः, तथा निशीथादावनुज्ञातत्वादिति। अत्र शङ्का कुर्वन् शिष्यः प्राह–ननु यथा शुभध्यानं सर्वकालमपि मोक्षहेतुत्वेनोक्तं, तथा किं न श्रुतज्ञानमपि तस्यापि मोक्षहेतुत्वात् मोक्षहेतो श्च कः कालः कश्चाकालः ? इति। गुरुरत्र प्रतिवचनमाह–सत्यं, परं शुभध्यानं सर्वधर्मक्रियानुगं मानसिकं च, नहि तेन काचिद्धर्मक्रिया बाध्यते, किन्तु प्रत्युतसर्वाऽपि पोष्यते, तेन तस्य शुभध्यानस्य सार्वकालिकत्वं युज्यते, श्रुतज्ञानं तु पठनगणनादिसाध्यं द्विसन्ध्यावश्यकादिवन्नियतकाल एवोचितं, तस्यैव च सर्वकालं पाठाद्यभ्यासेऽन्योन्यपुण्यक्रिया बाध एव स्यात् न च तथा श्रुतपठनमकाले युक्तमन्योन्यबाधयैव तासां सन्ध्यानामुक्तत्वादिति। तथा चोक्तं श्रीओघनिर्युक्तौ श्रीभद्रबाहुस्वामिपादैस्तथा च तत्पाठः। गाथा, जोगो जोगो जिणसासणंमि दुक्खक्खया पउंजंतो। अन्नुन्नमबाहाए असवत्तो होइ नायव्वो ॥ १ ॥ तच्छन्दार्थो–यथायोग्यः योगः जिनशासने दुःखक्षयात्प्रयुञ्जन्, अन्योन्यमबाधया असपत्नः भवति कार्यं १ इति। न च मोक्षहेतुत्वे कालविभा-

गस्यायुक्तत्वमिति । यथैवाऽऽहारविहारादीनां साधोर्मोक्षहेतुत्वेऽपि कालविभागस्य मोक्तत्वात् । यदागमः "तइआए पोरसीए भत्तपाणग वेसए" इति तदर्थो–यथा तृतीयायां पौरुष्यां भक्तपाने गवेषयेत् साधुरिति । तथा अकाले चरसि भिक्खू, कालं न पडिलेहसि । अप्पाणं च किलामेसि, संनिवेसं च गरिहसि ॥ १ ॥ तद्व्याख्या–अकाले चरसि भिक्षु कालं न प्रतिलेखसि, आत्मानं च क्लामयसि सन्निवेशं च गर्हसि १ । तथा निशीथचूर्णावप्युक्तं–यथा "विहारो उडुबद्धे न वासासु अहवा दिवा नो राओ अहवा दिवसओवि तइआए न सेसासु" इति । तदभ्यर्थो–यथा विहारः ऋतुबद्धेन वर्षासु अथवा दिवा न रात्रौ, अथवा दिवसतोऽपि तृतीयायां न शेषासु, इति निशीथचूर्णौ । तथा लोकेऽप्युक्तं श्लोकः । याममध्ये न भोक्तव्यं, यामयुग्मं न लङ्घयेत् । याममध्ये रसोत्पत्तिर्युग्मादूर्ध्वं बलक्षयः ॥ १ ॥ ग्रीष्महेमन्तिकान् मासानष्टौ भिक्षुर्विचक्रमेद् दयार्थं सर्वजीवानां वर्षास्वेकत्र संवसेत् २, दानादिकमपि काले विशेषफलं, यतः गाथा, "पत्ते गिलाणेसु आगमगाहीसु तह य कयलोए । उत्तरपारणगंमिअ दिण्णं सुबहुफलं होइ ॥ १ ॥ तद्व्याख्या पथश्रान्तग्लानेषु आगमग्राहिषु, तथा च कृतलोचे, उत्तरपारणके च दत्तं सुबहुफलं भवति ॥ १ ॥ काले दिण्णस्स पहेणयस्स, अग्घो न तीरए काउं । तस्सेव अय अकयाभिग्गस्स गिण्हं तया नत्थि ॥ २ ॥ तद्व्याख्या–काले दत्तस्य पथ्यदनस्येति यावदर्घ्यं न शक्यते कर्तुं मूल्यं कर्तुं न शक्यते इत्यर्थः । तस्य अकाल्य-प्रगाम्भितस्य अनवसरदत्तस्येत्यर्थः, ग्राहकता नास्ति २, करचुल्लुअपाणिएणवि अवसर दिण्णेण मुच्छिअमिमइ पच्छा मुआणसुवरि घडसय दिण्णेण किं तेण ॥ २ ॥ तद्व्याख्या–कश्चित्सुस्पष्टियं मति माह यथाकरचुल्लुकपानीयेनापि अवसरदत्तेन मूर्च्छितं प्राणिनं जीवयति यथा मोक्षः पुनरस्य घटसहस्रेण किं तेन ? ॥ ३ ॥ तथा कृषिवाणिज्यसेवादिकमपि काले एव कृतं बहुफलं नत्वन्यथा । तथा चोक्तं– "काले य कीरमाणं किसिकम्मं बहुफलं जहा भणिअं इअ सव्वच्चिय किरिया निअ निअ कालंमि कायव्वा ॥ १ ॥" तद्व्याख्या काले क्रियमाणं कृषिकर्म बहुफलं यथा भणितं, इति सर्वैव क्रिया निजनिजकाले च कर्तव्या ॥ १ ॥ ततः कारणात् श्रुतपाठादिकमुक्तकाले

एव कार्यं, दर्पादिना व्यत्ययकरणे तु सागरचन्द्राचार्यवन्महतीं लज्जामाप्नोति । सागरचन्द्राचार्योदाहरणं ॥ तथाहि—मालवदेशभूमिभूषणरूपाया मुज्जयिनीनगर्यां श्रीकालिकाचार्याः सदोद्यतविहारिणोऽभवन् । तेषां प्रार्श्वस्थाः शिष्यास्तु सर्वे पार्श्वस्थतां दधुः साध्वाचारेऽप्यनुयोगाः, तान् सूरयो नित्यं शिक्षयामासुः, परं ते तु शुनोलाङ्गुलवत् वक्रतां न त्यजुः, ततस्ते खिन्नाः सूरयो दध्युः, एतेषां सारणादिभिः मे स्वाध्यायोऽवसीदति, कश्चिदप्येषां मद्वाक्यैः गुणो न जायते, अत्र वृद्धवाक्यानुसारेण यथा श्रुतं सम्बन्धो लिख्यते । तद्यथा—एकदा श्रीमन्धिरजिना इन्द्रेण पृष्टाः स्वामिन् ! भरतक्षेत्रेऽधुना कोऽपि तादृशः विद्वान् वर्त्तते, यः पृष्टः युष्माभिः प्रोक्तं निगोदस्वरूपं वर्णयति, "यथाः—असंखिज्जायगोला असंखनिगोअओहवइ गोलो । इक्किक्कंमि निगोए, अणंतजीवा मुणेयव्वा ॥ १ ॥ इत्यादि । प्रभुः प्राह हे इन्द्र ! आर्याः कालिकसूरयोऽधुना मदुक्तानुसारेण श्रुतपाठबलेन तथैव कथयन्ति। तत इन्द्रः जरा जर्जरिताङ्गविधाय शनैःशनैः पुरो पुरो व्रजन् यष्टिकाऽऽधारं कृत्वा गुरुपार्श्वंगमियाय, अयस्कारभस्त्रामिव श्वासोच्छ्वासान् वहन्, गुरुं नत्वा पप्रच्छ, स्वामिन् ! अहं वृद्धो जरा मग्नः जातः, इदानीं कियत्परिमाणं ममायुः शेषं विद्यते ? मत्कररेखां शास्त्रानुसारेणाऽवलोक्य प्रसीद, पुत्रकलत्रादिभिः दूरोत्सारितोऽहं एकाकि कष्टेन दिनानतिवाहयामि, यूयं षट्जीवनिकायदयापरा मामनुग्रहं कुर्वन्तु, इति दीनवाक्यानि श्रुत्वा गुरवः करावलोकनं कुर्वन्तः किञ्चित्तस्य चेष्टा यथार्थं भाषणादिभिः, तथा किञ्चिद्दत्तश्रुतोपयोगेन च आद्यकल्पाधिपं विज्ञाय मौनत्वं दधुः । स प्राह स्वामिन्नहं जरापीडितोऽस्मि बहुवेलां स्थातुं न शक्तः, अतः शीघ्रं वाचं प्रयच्छ, अथोत्तरकालं कियन् मितं जीवितं मेऽस्ति पञ्चवर्षाणि यावत् किं वा न्यूनं आधिक्यं वा ? गुरुराह—अधिकतरं । सः स्माह किं दशवर्षाणि यावत् ? गुरुः प्राह एतेभ्योऽपि महदधिकतरं । सः स्माह—किं तर्हि विंशति वर्षाणि वा त्रिंशद्वर्षाणि चत्वारिंशद्वर्षाणि स्वामिन् ब्रूहि सत्यं ?, गुरुः प्राह किं पुनः पुनः पृच्छ्यते, युष्मदीयमायुः अङ्कगणनाद्यतिरिक्तं, अपरिमितमस्ति, मुनिसुव्रतस्वामिशासने इन्द्रत्वं लब्धं वर्त्तमानचतुर्विंशतिकांतिम चतुर्जिनानां पञ्चकल्याणकोत्सवः त्वया विहितोऽस्ति, आगामिचतु-

अस्माभिर्यादृशं चक्रे, तादृशं फलमासादि, इति निर्बन्ध पूर्वं तैः पृष्टः शय्यातरोऽपि तान् जगौ गुरोर्विहारदिशां। ततस्ते सर्वेऽप्यचलन् क्रमेण गुरुन् गवेषयन्तः सागरचन्द्रान्तिकं समाजग्मुः। तं सागरचन्द्रसूरिमिति; पपृच्छुः, आर्याः श्यामाह्वाः पूज्याः क्व सन्ति ? स आह तेतु मत्पितामहाः अत्र तु नायाताः किन्तूज्जयिन्याः, नोवेद्मि कश्चन एकोयतिर्वृद्धः समुपागतोऽस्ति, यूयं पश्यन्तु, अत्र स्थले वर्त्तते। ततस्ते शिष्याः गुरून् दृष्ट्वा दीनवदनाः स्वापराधक्षमयामासुर्भूयोभूयः ततः सागरचन्द्रसूरिस्त्रपयान्यङ्मुखो दध्यौ, अहोऽस्याग्रे मया पाण्डित्यं कृतं, तन्नाहं सूर्यकान्त्यग्रे खद्योतज्योत्स्ना, सदृशं मया दर्शितं, सात्रचन्दनमालिकेत्यादि ज्ञेयं"। ततः सोभ्युत्थाय विनयेन क्षामणं कृत्वा तत्पादयोर्न्यस्तमस्तकः इत्याह युष्माकं विश्वपूज्यानां यदज्ञानवशाद् मयाऽऽशतना कृता, तस्याः मिथ्यादुष्कृतमस्तु मे ॥१॥ ततः आचार्यास्तस्य प्रतिबोधाय नदीवालुका भृतं पल्लकमानाययन् चालणीकां च ततो गुरवस्ताः वालुकाश्चालणीकायां, संस्थाप्य हस्त क्रियायाः सूक्ष्मसिकताकणानधोपातयन्, चालणीकामध्ये बादराः कर्कराः शेषास्तान् दूरं संस्थाप्य पुनः सिकता कणान् क्वापि स्थानेऽखिलान् क्षिप्त्वा पुनस्तान् रेणूनुद्धृत्य द्वितीयस्थलेन्यस्तास्ततोऽपि तृतीये चैवं स्थाने स्थाने क्षिपन् क्षिपन् समुधृताः सिकताः स्तोकतरा जज्ञिरे, एव रेणुव्रात प्रदर्श्यन्तं जगुः वत्स नद्यां यथा भूयस्यो वालुकाः सन्ति, एवं जिनेन्द्रेषु सम्पूर्णं ज्ञानं पल्लकेन सरितः स्तोकवालुकाः यथोपात्ताः तथा गणधरैः स्तोकं जिनेन्द्रादाददे, श्रुतं स्थाने स्थाने निक्षिप्येत्क्षिप्ताः क्षित्यादिसंगते क्षीयमाणाः यथा स्तोकपल्लकवालुकाः अभूवन् तथा श्रुतं गणभृतामप्यागतमनुमानात्कालादि दोषतः अल्पअल्पतरबुद्धिषु शिष्येषु विस्मृत्यादेः क्षीयमाणमल्पमेवाधुना वर्त्तते। चालणीकज्ञातं योजना तु इत्थं कार्या, सूक्ष्मज्ञानं सर्वं विनष्टमधुना बादरज्ञानं, ततो हे वत्स धीमदोन कार्यः। तथा हे वत्स ! श्रुतं त्वया सम्यग्रीत्या पठितं, परं ज्ञानस्याद्याचार स्त्वया सम्यग् न निर्णीतः, यस्मादकाले स्वाध्यायं तनोषि, इत्यादि शिक्षां श्रीगुरुमुखात् श्रुत्वामिथ्यादुष्कृतं दत्वा श्रीगुरुं ननाम, विस्तारेण वैयावृत्यं विदधत्। काव्यं। विद्वत्सभायां श्रमणान्वितायां, हीयां च गर्हां बहुधा लमेत्सः। यत्कालमुल्लङ्घ्य पठेत्त श्रुतादीन् श्रीसागराचार्य इवात्मदर्पात्॥ १ ॥

इति सामरचन्द्रोदाहरणमाकर्ण्याऽन्यैरपि साधुभिरकाले स्वाध्यायो न विधेयस्तीर्थङ्करैरकाले स्वाध्यायकरणं निषिद्धत्वात्। तथा विचाररत्नाकरग्रन्थेऽपि यदुक्तमस्वाध्याये सर्वथा स्वाध्यायो न कर्तव्य इत्यभिप्रायो लिख्यते। यथा, "राया इव तित्थगरो जणवया साहुघोषण सुत्तं मेच्छाय असज्झावो रयण धणाइं च नाणादी। अत्र राजा इव तीर्थकरो, जानपदा इव साधवः, घोषणमिव जिनाज्ञा, म्लेच्छा इवास्वाध्यायो, रत्नधनानीव ज्ञानादीनि, तत्र ये साधवो जानपदस्थानीया राजस्थानीयस्य तीर्थकरस्याज्ञां नानुपालयन्ति, ते प्रान्त देवतया छल्यन्ते, प्रायश्चित्त दण्डेन च दण्ड्यन्ते, इति श्री व्यवहारभाष्यवृत्तौ षष्ठोद्देशके। तथा चतसृषु सन्ध्यास्वपि न कर्तव्यः। यथोक्तं व्यवहारभाष्ये गाथा। चउसंझासु न कीरइ पाडिवएसु तहेव चउसुंपि। जो जत्थ पूजती तू सव्वहिं सुगिम्हतो नियमा॥ ५॥ एतद्वृत्तिर्यथा–चतस्र सन्ध्या, तिस्रो रात्रौ तद्यथा अस्तमिते सूर्ये अर्द्धरात्रे प्रभाते च चतुर्थी दिवसस्य मध्यभागे, एतासु चतसृष्वपि सन्ध्यासु स्वाध्यायो न क्रियते, शेषक्रियाणां तु प्रतिलेखनादीनां न प्रतिषेधः, स्वाध्यायकरणे चाज्ञाभङ्गादयो दोषा, इति व्यवहारसूत्रवृत्तावपि अकाले स्वाध्यायकरणं निषिद्धमार्यैरिति। तथा स्थानाङ्गसूत्रे दशमे स्थानकेऽपि दशधाऽऽन्तरिक्षकाऽस्वाध्याया दशधा पुनरौदारिकशरीरसत्काऽस्वाध्यायाः प्रोक्तास्तथा च तत्पाठः। दसविहे अंतलिक्खिए असज्झाए पण्णत्ते, तं जहा उक्कावाए, दिसिदाहे, गज्जिए, विज्जुए, निग्घाए, जूयए, जक्खालित्तए, धूमिए, महिया रउग्घाए, दसविहे ओरालिए असज्झाए पण्णत्ते, तं जहा, अट्ठिमं से सोणिए, असुइसामंते, मसाणसामंते, चंदोवराए, सूरोवराए, पडणे, रायवुग्गहे, उवस्सयस्स अंतो ओरालिए सरीरे"। एतत्पाठवृत्तौ यदुक्तं श्रीअभयदेवसूरिभिस्तत्पाठो यथा–दसविहेत्यादिना सूत्रेणाह तत्र अंतलिक्खत्ति अन्तरिक्षमाकाशं तत्र भवमान्तरिक्षकं स्वाध्यायो वाचनादि पञ्चविधो यथा सम्भवं यस्मिन्नस्ति तत् स्वाध्यायिकं, तदभावोऽस्वाध्यायिकं उल्कापातजा तस्याः पात उल्कापातस्तथा दिशोदिशि वा दाहो दिग्दाह, इदमुक्तं भवति–एकतरदिग्विभागे महानगरप्रदीपनकमिव य उद्योतो भूमावसंश्लिष्टो गगनतलवर्ती, स दिग्दाह इति। गर्जितं जीमूतध्वनिर्विद्युदविद्योतितं,

साभ्रे निरभ्रे वा गगने व्यन्तरकृतो महागर्जितध्वनिः, जूयएत्ति सान्ध्यामभा चन्द्रप्रभा च यत् युगपत् भवस्तद् जूयगोत्ति भणितं, सन्ध्या प्रभा चन्द्रप्रभयोर्मिश्रत्वमिति भावः । तत्र चन्द्रप्रभावृता सन्ध्याऽपगच्छन्ति न ज्ञायते, शुक्लपक्षप्रतिपदादिषु दिनेषु सन्ध्या च्छेदे वा ज्ञायमाने कालवेला न जानन्त्यत स्त्रीणि दिनानि प्रादोषिकं कालं न गृह्णन्ति, ततः कालिकस्यास्वाध्यायः स्यादिति उल्कादीनां चेदं स्वरूपं । दिसि दाहोच्छिन्न मूलो उक्कस्स रेहा पयास जुत्ता वा संज्झा छेयावरणो उजूअ ओमुक्कदिणतिण्णत्ति ॥ १ ॥ जक्खालित्तंति यक्षा दीप्तमाकाशे भवति एतेषु स्वाध्यायं कुर्वतां क्षुद्रदेवताच्छलनाङ्करोति, धूमिका मिहिका भेदो वर्णतो धूमिका धूम्राकारा धूमेत्यर्थः । मिहिका प्रतीता एतच्च द्वयमपि कार्त्तिकादिषु गर्भमासेषु भवति, तच्च पतनानन्तरमेव सूक्ष्मत्वात्सर्वमपकायभावितं करोतीति रयउग्घाएत्ति विश्रसापरिणामतः समन्ताद्रेणु पतनं रज उद्धातो भण्यते, अस्वाध्यायाधिकारादेवेदमाह । दसविहे ओरालिए इत्यादि औदारिकस्य मनुष्यतिर्यक् शरीरस्येदमौदारिकामस्वाध्यायिकं । तत्राऽस्थिमांसशोणितानि प्रतीतानि, तत्र च पञ्चेन्द्रियतिरश्चामस्वाध्यायिकं द्रव्यतोऽस्थिमांसशोणितानि ग्रन्थान्तरे चर्माप्यधीयते यदाह । सोणियमसं चम्म अट्ठीविय होंति चत्तारित्ति । क्षेत्रतः षष्टिहस्ताभ्यन्तरे, कालतः सम्भवकाला यावत् तृतीयापौरुषी, मार्जारादिभिर्मूषकादिव्यापदने अहो रात्र चेति, भावतः सूत्रं नन्द्यादिकं नाध्येतव्यमिति । मनुष्यसम्बन्ध्यप्येवमेव, नवरं क्षेत्रतो हस्तशतमध्ये कालतोऽहोरात्रं यावदार्त्तवन्दिनत्रयं, स्त्रीजन्मनि दिनाष्टकं, पुरुषजन्मनि दिनसप्तकं, अस्थीनि तु जीवविमोक्षदिनादारभ्यः हस्तशताभ्यन्तरस्थितानि द्वादशवर्षाणि यावदस्वाध्याययिकं भवति, चिताग्निना दग्धान्युदकवाहेन वा व्यूढान्यस्वाध्यायिकं न भवति, भूमिनिखातान्यस्वाध्यायिकमिति । तथा अशुचीन्यमेध्यानि मूत्रपुरीषादीनि तेषां सामन्तं समीपं अशुचिसामन्तमस्वाध्यायिकंभवति, उक्तश्च कालग्रहणमाश्रित्य—"सोणियमुत्तपुरीसे, घाणा लोयं परिहरेज्जत्ति" । श्मशानसामन्तं शवस्थानसमीपश्चन्द्रस्य चन्द्रविमानस्योपरागो राहुविमानतेजसो परं जनं चन्द्रोपरागो ग्रहणमित्यर्थः ! एवं सूरोपरागोपि इह चेदक्कालमानं यदि चन्द्रः सूर्यो वा ग्रहणे सति स

थोऽधस्तादन्धकार इति दिग्दाहः उल्काधिष्ठिताः सरेखाः प्रकाशयुक्ता वा तारकस्येव पातकः यूपको नाम शुक्लपक्षे त्रीणि दिनानि यावद्वितीयस्यां तृतीयस्यां चतुर्थ्यां चेत्यर्थः। सन्ध्याच्छेदः सन्ध्याविभागः स आव्रियते येन स सन्ध्याच्छेदावरणश्चन्द्रः। इयमत्र भावना शुक्लपक्षे द्वितीया तृतीया चतुर्थी रूपेषु त्रिषु सन्ध्यागतेश्चन्द्र इति कृत्वा सान्ध्या न विभाव्यते ततस्तानि शुक्लपक्षे त्रीणि दिनानि यावच्चन्द्र सन्ध्याच्छेदावरण स यूपकप्रतीतेषु दिवसेषु प्रादोषिकं कालं न गृह्णन्तीति, प्रादोषिकीं सूत्रपोरुषीं न कुर्वन्तीति। सन्ध्याच्छेदाविभागेन कालवेला परिज्ञानाभावादिति। "चंदिमसूरुवरागे निग्घाए गुंजिए अहोरत्तं।" व्याख्या चन्द्रस्य चन्द्रविमानस्य सूर्यस्य सूर्यविमानस्य उपरागो राहुविमानतेजस्को परं जनं चन्द्रोपरागो ग्रहणमित्यर्थः। एवं सूर्योपरागोऽपि ततश्चन्द्रोपरागे सूर्योपरागे च तद्दिनापगमे इति वाक्यशेषः। तथा साभ्रे निरभ्रे वा नभसि व्यन्तरकृतो महागर्जितशब्दोऽपि निर्घातः गर्जितस्यैव विकारो गुञ्जावद्विकारो मण्डुजमानो महाध्वनि गुञ्जितं तस्मिन्निर्घाते गुञ्जिते च प्रत्येकमहोरात्रं यावत्स्वाध्यायपरिहारोऽयं चात्र विशेषो यस्य वेलायां निर्घातो गुञ्जितं चाधिकृते दिने भवेत् द्वितीयेपिदिने यावत्सैव वेला प्राप्ता भवति तावदस्वाध्याय एव, इति गाथा पूर्वार्थः। आइण्णंणि मुक्कोसो सो विय दिवसोवराई वा गाथार्द्धं व्याख्या—गाथोत्तरार्द्धमाचीर्णमिदं चन्द्रो रात्रौ गृहीतोऽथ रात्रावेवमुक्तस्ततस्तस्या एव रात्रेः शेषं वर्ज्जनीयं यस्मादागामिसूर्योदये समाप्तिरहोरात्रस्य जाता, सूर्योऽपि यदि दिवा गृहीतो दिविचनमुक्तस्तनस्तस्यैव दिवसस्य शेषं रात्रितश्च वर्जनीयेति। "महपरपगए बहुपक्खिए य सत्तघरऽंतरमयम्मिनिदुक्खत्ति य गरहाय पढंति सणीअगं वावि ॥ ७ ॥ व्याख्या महत्तरके ग्रामप्रधाने प्राकृते ग्रामाधिकारनियुक्ते बहुपाक्षिके बहुस्वजने, चकारात् शय्यातरेऽन्यस्मिन्वा प्राकृते मानुषे वसत्यपेक्षया समगृहाभ्यन्तरे मृते, तद्दिवसमेकमहोरात्रमस्वाध्यायः, किं कारणमत आह—निर्दुःखा अमी, इत्यमीत्या गर्हा सम्भवात्, ततो न पठन्ति, वाऽथवा यदि पठन्ति तद शनकैस्तथा पठन्ति, यथा न कोऽपि शृणोतीति, महिलारुदितशब्दोऽपि यावत् श्रूयते तावन्न पठन्ति, "सेणाहिव भोइअ मयहरे अपुंछिमल्लहुड्डेयलोढ्ढाइ भंडणेय गुज्झग उड्डा-

पडिवया बारसदिण असज्झाइंति ।" तथा एवं चैत्रशुक्लाष्टमीदिने मध्यान्हतः प्रारभ्य कृष्णप्रतिपदं यावदस्वाध्यायकालो, द्वितीयायां तु समुचितः यदागमः "एवं चित्तमासे वि सुक्कपंचमी पहर दुग्गं जाव पडिवया बारसदिनं असज्झाइत्ति" तथा द्वयोर्मेदिनीनाथयोः कलहो यावद्वर्तते तावदस्वाध्यायकालः यदागमः—" दुण्हं रायाणं कलहो जाव वट्टइ ताव असज्झाइ सुत्तवायणा न हुंति " अथवा नृपसेनापत्यादीनां परस्परं सङ्ग्रामेऽस्वाध्याय इति । तथा म्लेच्छादिभयेन पुरं यावत्संनिरुद्धं तिष्ठति तावदस्वाध्यायकालः, यदागमः मिच्छाई भये नगरे संनिरुद्धे चिट्ठइ ताव असज्झाइत्ति ।" तथा नृपे कालगते यावदन्यो राजा राज्येनाभिषिक्तो भवति तावदस्वाध्यायकालः, यदागमः—"रायादेवत्तं गओ जाव अन्नो न हवइ ताव असज्झाइत्ति ।" तथा यत्राऽऽलयाभ्यर्णे स्त्रीपुरुषयोर्गुह्यकलहो यावद्वर्तते तावदस्वाध्यायकालः, यदागमः—"जत्थ आलयासन्ने इत्थिपुरिसे पंति गुज्झं करित्ति कलहो जाव वट्टइ ताव असज्झाइत्ति।" तथा फाल्गुने मासे रजः पर्वणि धूलीकीला यावन्नोपशाम्यति तावदस्वाध्यायकालः, यदागमः—"फागुणे धूलीकीला जाव वट्टइ तावअसज्झाइति।" तथा नगरे प्रधानपुरुषे मृते एकाहोरात्रं यावदस्वाध्यायकालः, यदागमः—"नयरे पहाणपुरिसे मुएसमाणे अहोरत्तमेगं असज्झाइत्ति" तथोपाश्रयतः सप्तगृहमध्ये कोऽपि सिद्धनरो मृतस्तदा एकाऽहोरात्रं यावदस्वाध्यायकालः, यदागमः—"आलयासन्ने सत्तघरमज्झे पसिद्धनरमुएसमाणे अहोरत्तमेकं असज्झाइत्ति" तथा कस्मिंश्चिदनाथे अन्यस्मिन्नरे हस्तशताभ्यन्तरे कालगते तत्कलेवरं यावत्तिष्ठति, तावदस्वाध्यायकालस्तत्कलेवरोत्पाटिते तु शुद्धयति स्वाध्यायः यदागमः—"अणह पुरिसे मुए जाव चिट्ठइ ताव असज्झाइति" तथा स्त्रीणां रोदनशब्दो यावदाकर्ण्यते तावत्सूत्रपाठं न पठन्ति, तथा तिरश्चिमृते तत्कलेवरं यावत्तिष्ठति तावदस्वाध्यायकालः, यदुक्तं—"तिरिये मुए जाव चिट्ठइ ताव असज्झाइत्ति" तथा तिर्यक्पञ्चेन्द्रियाणां मत्स्यादीनां न तु विकलाक्षाणां रुधिरे मांसे हड्डे य क्षेत्रतः षष्टि हस्ताभ्यन्तरे पतिते तत्समुत्पाटितानन्तरं प्रहरत्रिकं यावदस्वाध्यायकालः, यच्चोक्तं—"तिरियाणं रुहिरे पडिए उद्धरिए वि तिन्निपहर असज्झाइत्ति" तथा तिरियाणं अवयवं वा रुहिरं

ज्झाइ जइमज्झे मग्गो न भवइ। तथा हस्तशताभ्यन्तरे दारकादीनां दन्तः पतितो यत्र तत्रान्वेष्यो यदि दृश्यते तदापरिष्ठाप्यो यदि न दृष्टस्तदा "दंत ओहडावणिअं करेमि काउस्सग्गं" एकलोकोद्योतकरकायोत्सर्गो विधेयस्तदनुस्वाध्यायः शुद्ध्यति, यदुक्तं—" अहदंतो दाढा वा पडिया पयत्तणं पलोइया न लद्धा, तओ दंता उडावणिअं काउस्सग्गं एग लोगस्स कायव्वं, तओ पच्छा सज्झायकरणं कप्पइत्ति।" तथा दन्तं मुक्त्वा शेषेष्वङ्गोपाङ्गादि सबन्धिष्वस्थिषु हस्तशताभ्यन्तरे पतितेषु द्वादशवर्षाणि न कल्पते, यदुक्तं—"माणुस्स हाडे बारससंवस्सराणि असज्झाइत्ति।" अत्र प्रवचनसारोद्धारवृत्तौ त्वेवं तद्यथा—दन्तं मुक्त्वा शेषाङ्गोपाङ्गादि सम्बन्धिष्वस्थिषु हस्तशताभ्यन्तरे पतितेषु द्वादशवर्षाणि न कल्पते स्वाध्यायः, अथ तान्यस्थीन्यग्निना दग्धानि तदा हस्तशताभ्यन्तरस्थितेष्वपि तेषु च क्रियते स्वाध्यायस्य वाचनादेः परिहारः, अनुप्रेक्षा न कदाचनापि प्रतिषिद्ध्यते इति। अत्र द्वादशवर्षीयकालोऽस्वाध्यायः प्रोक्तः तत्परमार्थस्तु बहु श्रुतगम्यः, तथा आर्द्रानक्षत्रादारभ्य स्वातिनक्षत्रं यावद्विद्युद्गर्जनयोर्मेघवर्षणादीनामस्वाध्यायकालो न भवति। यदुक्तं—अद्दाइ दस नक्खत्त आइ च गए गज्जए विज्जुए सज्झायं च न ओवहणात्ति जाव साइ नक्खत्ते तावतारग अद्दंसणे वि सज्झायं कायव्वमिति। तथाऽऽकाशे गन्धर्व नगरे कृते तच्छमनानन्तरमेकप्रहरं यावदस्वाध्यायकालः। यदुक्तं—"आकासे गंधवनगरे कए समाणे जाव भवइ ताव पच्छावि पहरमेगं असज्झाइत्ति" तथा दिग्दाहोऽपि यावद्भवति तावदस्वाध्यायकालः, चचोक्तं—" दिसि दाहो जाव भवइ ताव असज्झाइत्ति " अकाले मेघवर्षणे तन्मेघास्त्रिधा बुद्बुदः यस्मिन् वर्षति मेघे बद्बुदा भवन्ति तद्बुद्बुदमेघः, तथा बुद्बुदवर्जितो मेघः यन्मेघे वर्षति बुद्बुदा न पतन्ति तन्मेघ नाम तद्वर्जकमिति, तथा स्पर्शको मेघः यन्मेघे सूक्ष्मसूक्ष्म जलकणा यत्र पतन्ति तत्स्पर्शको मेघः फुसया इति प्रसिद्धं। यदुक्तं प्रवचनसारोद्धारवृत्तौ श्रीसिद्धसेनसूरिभिस्तत्पाठो तथा तानेवाह। बुबुयंति अत्र वर्षति पतन्ति पानीयमध्ये बुद्बुदास्ते ये शलाकारूपा उत्तिष्ठन्ति तद्वर्षामप्युपचारात् बुद्बुदमित्युच्यते, तद्वर्जं तैर्बुद्बुदैर्वर्जितं द्वितीयं वर्षं तृतीयं फुसिए यत्ति जलस्पर्शकानि पतन्त्यः तत्र बुद्बुदे वर्षे निपतति

षीर्दिवसस्य हन्ति, चतस्र आगामिन्यारात्रेश्चतस्रो द्वितीयस्य दिवसस्य, अथवा उत्पातिकाग्रहणेन सर्वरात्रिकं ग्रहणं जातं समग्र एव निमग्नस्ततः संपित् रात्रेश्चतस्रः पौरुषीरन्यथाहोरात्रं, अथवा अन्नभयादिशेषपरिज्ञानाभावाच्च जीतं कस्यां वेलायां ग्रहणं प्रभातेवसग्रहो निमज्जन् दृष्टः, ततः समग्रारात्रिः परिहृत, अन्यथाहोरात्रमति द्वादश, तथा सूर्यो जघन्येन द्वादशपौरुषी हन्ति उत्कर्षतो द्वावष्टौ षोडशपौरुषीइत्यर्थः। कथमिति चेदुच्यते—सूर्यसग्रह एवास्तमुपयातस्ततश्चतस्र पौरुषी रात्रे हन्ति चतस्र आगामिनो दिवसस्य चतस्रस्ततः परारात्रेरेवं सूर्य उद्गच्छन् राहुणा गृहीत सकलं दिवसमुत्पातवशात्सग्रहं स्थित्वा सग्रह एवास्तमुपगतस्ततश्चतस्रः पौरुषी दिवसस्य हन्ति चतस्र आगामिन्यारात्रेस्ततश्चतस्रः परदिवसस्य ततोऽपि चतस्रः परारात्रेः एवं षोडश पौरुषीर्हन्ति सग्रह एवास्तमितः, तथा चोक्तं—"एवं उग्गाहति पुट्टे घुठे दद्धवमिति, सूराई जेणहोतहोरत्ताति" सूर्यादयो येनाहोरात्रीयत सूर्यादिवाहोरात्रस्ततो दिनमुक्त सूर्ये स एव दिवसः सैवरात्रिरस्वाध्यायिकतया परिहियते, चन्द्रे तु तस्यामेव रात्रौ मुक्ते यावदपरश्चन्द्रो नोदेति तावदस्वाध्याय इति, सैवरात्रिरपरं च दिनमित्येवमहोरात्रं स स्वाध्याये तु पुनराहुर्वर्णमिदं चन्द्रो रात्रौ गृहीतो रात्रा चैवमुक्तस्तस्या एव रात्रेः शेष वर्ज्जनीयं यस्मादागामि सूर्ये दिने समाप्ति रहोरात्रस्य ततो सूर्योऽपि यदि दिवा गृहीतो दिवैवमुक्तस्ततस्तस्यैव दिवसस्य शेषरात्रिश्च वर्जनीयेति, गतं सदैवमस्वाध्यायिकं इति प्रवचनसारोद्धारवृत्तौ इत्यादि सिद्धान्तेष्वस्वाध्यायकाले सर्वथा स्वाध्यायो न कर्त्तव्यः, इत्युक्तमतः परमस्वाध्यायसमयास्त्वनेक विधाः सन्ति, तत्स्वरूपं विशेषार्थिभिरावश्यकसूत्रबृहद्वृत्ति गताऽऽवश्यकनिर्युक्तिवृत्तौ प्रतिक्रमणाध्ययने—"असज्झायं सज्झाए न सज्झाय" मेतत्पदोपरि निर्युक्तिवृत्तिस्तथा प्रवचनसारोद्धारे अष्टषष्ठ्यधिक द्विशततम द्वारतोऽवसेयमत्र तु ग्रन्थ गौरवभयात्सर्वेऽप्यस्वाध्यायकालानोक्ता इति, तथैव सम्प्रदायानुसारेण सिद्धान्तानुसारेण च सम्यगस्वाध्यायस्वरूपमवगम्य पठनीयमिति—अत्रागमकलाविकलो लुम्पाकमती प्राह ननु यद्येवमस्वाध्यायकाले स्वाध्यायो न कर्त्तव्य इत्युक्तं, तर्हि प्रतिक्रमणादिक्रियाऽपि श्रीआवश्यकसूत्रगतैव, श्रीआवश्यकसूत्रं तु साधुश्रावकैश्च निरन्तरं पठ्यते, उभ-

सकालमप्यवश्यं प्रतिक्रमणकरणादित्यादिति, सदाऽऽवश्यककरणे साधूनामस्वाध्याये कथं न दोषः ? तथा चैत्राश्विन चतुर्मास्यादि
गतचतुर्दश्यामपि पाक्षिकसूत्रादिकं साधुभिः प्रोच्यते, ततस्तत्र कथं न दोषः ? इति । अत्रोत्तरं भो लुम्पाक ! एतदपि तव वचनमकृतक-
लाविलसितं, यतः आवश्यकं तु साधुभिः सत्येनावश्यं करणीयत्वात् सदाऽऽवश्यककरणे न दोषः यथोक्तमनुयोगद्वारसूत्रे—गाथा "सम-
णेण सावएण य अवस्स कायव्वं हवइ जम्हा अंतो अहनिसिस्स य तम्हा आवस्सयं नाम ॥ २ ॥" एतद्गाथाव्याख्यापादस्तु समस्तकार्य स्या
स्यायां प्रोक्तः पुनरत्र नोच्यते, तेन हेतुनाऽस्वाध्यायकालेऽप्यावश्यककरणं युज्यते, तथैव पाक्षिकसूत्रादिकमपि आवश्यकमध्ये साधुभि-
रवश्यं पठनीयत्वादित्यस्वाध्यायकालेऽपि न दोषः अवश्यकरणीयत्वादिति, अत एव श्रीव्यवहारसूत्रवृत्तिप्रमुखेषु प्रोक्तं, प्रतिलेखनादीनां तु
न प्रतिषेध इत्यादि स्वयमेव विचार्य । अस्वाध्यायकाले वाचनादिनादिभिः साधुरनर्थमाप्नोति, अत्रार्थे साधोरुदाहरणं चेदं तथाहि एकः साधुः
प्रादोषिकं कालग्रहणानन्तरं कालिकश्रुतमतीतानामपि तद्वेलामजानानः परावर्तयते, तत्र सम्यग्दृष्टि देवतया चिन्तितं बोधयाम्यहं साधुमिति
ध्यात्वा देवता तक्रमस्य ततो मथितकारिका रूपेण मथितघृतमेव घटं मस्तके निधाय तस्यैव साधुरन्तिके गताऽऽगतानि कुर्वती मथितं क्रम्यत,
इति मत्वा अन्येन पुनः पुनः घोषयन्ती परिभ्रमति, ततोऽस्तुरेप्सितेन साधुना स्वाध्यायव्याघातकर्मोऽति भणिता, अहो ! भवत्यस्तक्र
विक्रयवेला, ततो मथितकारिकयाप्यभाषि, अहो तवापि स्वाध्यायवेला, ततो विस्मितः साधुरुपयुक्तो मिथ्यादुष्कृतं ददाति, मिथ्यादुष्कृतानि
भवन्तु पुनरप्येवं माकार्षीस्त्वमित्यादि साधुर्देवतयाऽनुशासितः, इति श्रुत्वाकाले एव स्वाध्यायो विधेयः, यतः यस्मात्कारणात् क्रिया
यथोक्तसमये विहिताः अवश्यं फलन्ति, इत्यस्वाध्यायकाल विचारा ज्ञेयाः । अथ प्रकृतमुच्यते—पूर्वं कालयोपरार्द्धे त्वनुयोगश्च प्रोक्त
स्तत्रायमर्थः पूर्वं सूत्रार्थं पाठयेद्वितीयं निर्युक्तिमिश्रं पाठयेत्तृतीयं निःशेषं पाठयेदित्यादि । नन्वनुयोग इति कः शब्दार्थस्तथा केन पठनीय ?
इति चेदुच्यते—अनुयोगद्वारसूत्रवृत्तौ श्रीहेमचन्द्रसूरिभिस्तथा अनुयोगोऽस्ति अयमत्र भावार्थोऽनुयोगस्य प्रक्रान्तत्वादुक्तरूपत्वात्

प्रतिबद्धाया अस्या गाथाया इहावसरः, तद्यथा—"निक्खेवे गट्ठनिरुत्ति विहिपवित्तीय केण वा कम्म तद्दार भेय लक्खण तदरिह परिसाय सुत्तत्थो," अस्या विनेयानुग्रहार्थं व्याख्या, इहानुयोगस्य निक्षेपो नामस्थापनादिको वक्तव्य, तथानुयोगस्यैकार्थिकानि वक्तव्यानि, यदाह "अणुओगो य नियोगो भासवि भासायवत्तियं चेव एते अणुओगस्स य नामा एगट्ठिया पंच २।" तथानुयोगस्य निरुक्तं वक्तव्यं तद्यथा—स्वाभिधायकसूत्रेण सहार्थस्य अनुगीयते, अनुकूलो वा योगोऽस्येदमभिधेयमित्येवंसंयोज्य शिष्येभ्यः प्रतिपादनमनुयोगः सूत्रार्थकथनमित्यर्थः। अथवा एकस्यापि सूत्रस्यानन्तोऽर्थ इत्यर्थो महान् सूत्रंत्वणु ततश्चाणुना सूत्रेण सहार्थस्य योगोऽनुयोगस्तदुक्तं ॥ नियमाणुकूलो जोगो सुत्तस्सत्थेण जोय अणुओगोसूत्तं च अणुं तेन जागोत्थस्स अणुओगो। तथानुयोगस्य विधिर्वक्तव्यो—यथा प्रथमं सूत्रार्थ एव शिष्यस्यकथनीयः, द्वितीयवारायां सोऽपि निर्युक्त्यर्थं कथनमिश्रस्तृतीयवारायां तु प्रसङ्गानुप्रसङ्गागतः सर्वोप्यर्थो वाच्यस्तदुक्तं—" सुतत्थो खलु पढमो बीओ निज्जुत्ति मीसओ भणितो तइओय निरवसेसो एसविही होइ अणुओगो ,, इत्याद्यन्योऽपि अत्र विधिर्वाच्योदिङ्मात्रत्वादस्येति ४। तथानुयोगस्य प्रवृत्तिर्यथा भवति तथा वाच्यं, तत्रोद्यमी सूरिरुद्यमिनः शिष्याः, उद्यमी सूरिरनुद्यमिनः शिष्याः, अनुद्यमी सूरिरुद्यमिनः शिष्याः, अनुद्यमी सूरिरनुद्यमिनः शिष्या इति चतुर्भङ्गी, अत्र प्रथमभङ्गे अनुयोगस्य प्रवृत्तिभवति चतुर्थे तु न भवति द्वितीयतृतीययोस्तु काचित्कथञ्चिद्भवत्यपि ४। तथानुयोगः केन कर्त्तव्य ? इति तद्योगःकर्ताभिधानीयो यदाह—"देसकुलजाइरूवी संघयणी धिईजुओ अणासंसो अविकत्थणो अमाइ थिरपरिवाडी गहिय वक्को " थिरपरिवाडित्ति अविस्मृतसूत्रः, " जियपरिसो जियनिद्दो मज्झत्थो देसकाल भावन्नू आहारहेउ उवणया नयनिउणो गाहणा कुसलो ॥ १ ॥ ससमय परसमय विउ गंभीरोदित्तिमं सिवो सोमो गुणसयकलिओजुत्तो पवयणसारं परिकहेउं ॥ २ ॥ सिवोत्ति मन्त्रादि सामर्थ्यादुपशमितोपद्रवः, युक्त उचितप्रवचनसारं परिकथयितुं ॥ ६ ॥ तथा अयमनुयोगकस्य शास्त्रस्यैवंभूतेन गुरुणा कर्त्तव्य इत्यपि वाच्य ॥ ७॥ तथा तद्दारिति तस्यानुयोगस्य द्वाराण्युपक्रमादीन्य

धारणे ततोयमर्थः गुरुणा प्रथमोऽनुयोगः सूत्रार्थाभिधानलक्षण एव कर्त्तव्यः, माभूत्प्राथमिकविनेयानां मतिमोहो, द्वितीयोऽनुयोगः सूत्रस्पर्शिकनिर्युक्तिमिश्रितो भणितस्तीर्थंकरगणधरैः, सूत्रस्पर्शिकनिर्युक्ति मिश्रितं द्वितीयमनुयोगं गुरुर्विदध्यादित्याख्यातं तीर्थङ्करगणधरैरिति भावः। तृतीयश्चानुयोगो निरविशेषः प्रसक्तानुप्रसक्त प्रतिपादनलक्षणः, इत्येष, उक्तलक्षणो विधिर्भवत्यनुयोगे व्याख्यायामाह । परिनिष्ठा सप्तमे इत्युक्तं । त्रयश्चानुयोग प्रकारास्तदेतत्कथं? उच्यते त्रयाणामनुयोगानामन्यतमेन केनचित्प्रकारेण भूयो २ भाव्यमानेन सप्तवारा श्रवणं कार्याः ततो न कश्चिद्दोषः, अथवा किञ्चिन्मन्दमतिविनेयमधिकृत्य तदुक्तं द्रष्टव्यं न पुनरेष एव सर्वत्र श्रवणविधिनियमः, उद्घटितज्ञविनेयानां सकृच्छ्रवणत एवाशेषग्रहणदर्शनादिति कृतं प्रसङ्गेन, इति नन्दिसूत्रवृत्तौ। अत्रानुयोगत्रिके, तइयो निरवसेसो इति वाक्ये भाष्यटीकाचूर्णी प्रमुखाः समागता एव तत्कारणात्सूत्रेषु जिनैः पञ्चाङ्गी मन्तव्यता दर्शिता । तथानुयोगग्रहणविधिः गुणवतां साधूनां दर्शितो न तु श्रावकाणां, यदि साधवोऽपि योगवहनकर्त्तार एव सूत्रपठनपाठनेऽधिकारिणस्तदा श्रावकाणां तु काकथेति साधुभिरपि योगवहनं कृत्वैव सूत्रं पठनीयं वाचनीयं च नत्वन्यथा तत्कारणात् तीर्थङ्कराज्ञापरिपालकाः श्रावकास्तु जैनागमं नहि वाचयन्तिपठन्ति च जैनागमेषु हि श्रावकाणामागमवाचन निषिद्धत्वादिति विशेषार्थः

इति श्रीमत्पन्न्यासदयाविमलजित्सुशिष्यपन्न्यासश्रीसौभाग्यविमलजिद्विनेयपन्न्यासमुक्तिविमलेन विरचितायां स्वोपज्ञाऽऽगमवाचनमीमांसावृत्तौ श्रीषोडशकाव्यार्थः ॥

इत्येवं कथितं वरे सुभगवत्याद्येऽनुयोगत्रिकं,
तद्ग्राह्यं व्रतिभिः परं न गृहिणां सूत्रोक्तपाठग्रहः ।

प्रोक्तस्तेन सुसूत्रकं सुगृहिभि र्नो वाचनीयं कदे-
स्याज्ञाज्ञा परिपालका सदनिनो ये ते सदाराधकाः ॥ १७ ॥

अथ समुदायकाव्यव्याख्यामाह । अत्र काव्ये पूर्वोक्तमनुयोगत्रिकं कस्मिन्सूत्रे प्रोक्तमिति सूत्रसम्मतिं दर्शयन्नाह—इत्येवं कथितमित्यादि इत्येवममुना प्रकारेण अनुयोगत्रिकमिति सूत्रार्थनिर्युक्तिभिन्नाशेषस्थानामनुयोगानां त्रिकं त्रयमित्यनुयोगत्रिकं कथितं प्रोक्तं जिनैरिति शेषः । क्व प्रोक्तमित्याह—सुभगवत्याख्ये शोभनभगवतीसूत्रप्रमुखे जैनसिद्धान्ते प्रोक्तं । अत्र जातित्वादेकवचनं, अन्यथादिशब्दात् नन्दीसूत्रानुयोगद्वारसूत्रादिष्वपीति शेषः तत्कैर्ग्राह्यमित्याह तद्ग्राह्यंव्रतिभिरिति तदनुयोगत्रिकं व्रतिभिः साधुभिः योगवहनकर्तृभिरिति गम्यं ग्राह्यं ग्रहणीयं न त्वन्यैः साधुभिरिति परं सूत्रोक्तपाठमह" सूत्रे उक्तः प्रोक्तो यो पाठः सूत्रपाठस्तस्य ग्रहो ग्रहणं गृहिणां गृहस्थानां न नहि प्रोक्तो जिनैरिति शेषः । कुत्रापि गृहस्थैः सूत्रपाठः पाठ्य ग्राह्य इति न प्रोक्तं इत्यर्थः । प्रोक्तानां त्वयं दृषेति, तेनेति तत्कारणेन सुसूत्रकं जिनोक्तागमं कदेति कदाचिदपि सुगृहिभिः शोभनगृहस्थैः जिनाज्ञापरिपालकैरित्यर्थः, नो वाचनीयं नहि वाचनीयं इत्याज्ञाज्ञा परिपालकाः इत्यमुना प्रकारेण आज्ञानां तीर्थङ्कराज्ञाया आज्ञायाः परिपालकाः ये सदनं गृहमेषां ते सदनिनः गृहस्थास्ते गृहस्थाः सदा निरन्तरं आराधकाः विज्ञेया इति तीर्थङ्कराज्ञा, विराधकास्तु गृहस्था विराधका ज्ञेया । इति काव्यसमुदायार्थः ॥

विशेषार्थस्त्वयं, पूर्वोक्तमनुयोगत्रिकं भगवतीसूत्रे पञ्चविंशतितमे शतके तृतीयोद्देशकेऽपि प्रोक्तं, तथा च तत्पाठ—गाथा । सुत्तत्थो खलु पढमो, बीओ निज्जुत्तिमिसिओ भणिओ । तइओ निरवसेसो, एस विही होइ अणुओगो ॥ १ ॥ तद्वृत्तौ यथाक्रमं यथैव सूरिभिस्तथा—"सुत्त इत्यादि गाथा । सूत्रार्थमात्रप्रतिपादनपरः सूत्रार्थोऽनुयोग इति गम्यते, खल्वु मन्दसंस्तेचकारार्थं , स चायमाद्य इत्येवमुक्तं

भवति–गुरुणा सूत्रार्थमात्राभिधानलक्षण प्रथमोऽनुयोगः कार्यः माभूत्प्राथमिकविनेयानां मतिमोह इति द्वितीयोनुयोगः सूत्रस्पर्शिकनिर्युक्ति मिश्रः कार्यं, इत्येवम्भूतो भणितो जिनादिभिः, तृतीयश्च तृतीयः पुनरनुयोगो निरवशेषो निरवशेषस्य प्रसक्तानुप्रसक्तस्यार्थस्य कथनादेषोऽनन्तरोक्तः प्रकारत्रयलक्षणो भवति। स्याद्विधिर्विधानमनुयोगे सूत्रस्यार्थे नानुरूपतया योजनलक्षणे विषय भूत इति गाथार्थः। इति भगवतीसूत्रवृत्तौ तदनुयोगत्रिकं योगकर्तॄणां साधूनां देयं, सूत्रपठने वाचने च योगवाहिसाधूनामधिकारित्वादिति। अत्र सिद्धान्तकलाकलापलुम्पाकः लुम्पाकमती प्राह–ननु योगविधिना साधूनां श्रुतपठनं प्रोक्तं, तर्हि महत्कालोल्लङ्घनं स्यात्, धनानगारस्तु अल्पकालेनैवैकादशाङ्गाध्ययनं चकार, तथैव स्थविरसाधवोऽपि धन्यर्षिनामानं योगोद्वहनमन्तरेण श्रुतोक्तविध्यपेक्षया प्रकारान्तरविधिना वा एकादशाङ्गीमध्यापितवन्तः, यदुक्तं श्रीअनुत्तरोपपातिकदशाङ्गसूत्रे, तद्यथा–"तएणं धण्णअणगारे समणस्स भगवओ महावीरस्स तहारूवाणं थेराणं अंतिए सामाइआमाइआइं इक्कारस अंगाइं अहिज्जइत्ति २ संजमेणं तवसा अप्पाणं भावे माणे विहरत्ति," इत्यादि यावत्, मासिआए संलेहणाए नवमासपरिआओ जावकालमासे कालं किच्चा उड्ढं चंदिम जाव नवगेविज्जविमाणपत्थडे, उड्ढं दूरं वीतीवत्तित्ता सव्वट्ठसिद्धे महाविमाणे देवताए उववण्णेत्ति," अनुत्तरोपपातिकसूत्रे, अत्र नवमासपर्यायोऽपि धनर्षिरेकादशाङ्गधरः कथितः, स च श्रुतव्यवहारानुगतयोगानुष्ठानवान् न सम्भवति, तावताकालेन योगानुष्ठानासम्भवात्, तथा "तिवरिस परिआगस्स समणस्स निग्गंथस्स कप्पति आयारप्पकप्पनाममज्झयणमुद्दिसित्तए" इत्यादि पर्यायप्राप्तेरप्यसम्भवात्, तेन यथाऽत्र पर्यायप्राप्त्यभावेऽपि तदध्ययनं, तथा योगाद्यभावेति, परं सविधिः न तु श्रुतव्यवहारिणा अनुष्ठेय इति तात्पर्यः, तेन योगवहनं कृत्वैव साधुभिः श्रुतपाठः कार्यः इति पाठस्तु कल्पनामात्रः सम्भाव्यते इति। तथोपधानरूपाश्रुतोपचारक्रिया सर्वेषां नियता, किं वा नेति लुम्पकमतेरभिप्रायः। अथात्र प्रतिवचनं हे सिद्धान्तपरमार्थाज्ञ लुम्पाकमते ! शृणु, श्रीजिनेश्वरैः सिद्धान्ते पञ्चव्यवहाराः प्रोक्ताः सन्ति, यदा यो व्यवहार प्रवर्त्तते तदा तेन व्यवहारेण प्रवर्त्तितव्यमन्यथा जिनाज्ञाभङ्गः स्यात्,

कश्चित्-किमष्टमपूर्वान्तमेव श्रुतं, नवमपूर्वादीनां न श्रुतत्वं उच्यते ? आगम्यन्ते परिच्छिद्यन्तेऽतीन्द्रियाः पदार्था येन स आगम, इति व्युत्पत्तेर्नवमपूर्वादीनां श्रुतत्वाविशेषेपि केवलज्ञानादि वदन्तीन्द्रियार्थेषु विशिष्टज्ञानहेतुत्वेन सातिशयत्वादागमत्वेनैव व्यपदेशः, शेषश्रुतस्य तु नातीन्द्रियार्थेषु तथाविधोऽवबोधस्ततोऽस्मिन् "श्रुतव्यवहारः" इति जीतकल्पवृत्तौ, तथैव जैनसिद्धान्ते पञ्चव्यवहाराः प्रोक्तास्तथाहि । आगमव्यवहारः १ श्रुतव्यवहारः २ आज्ञाव्यवहारः ३ धारणाव्यवहारः ४ जीतव्यवहारः ५ । एते पञ्चव्यवहारास्तीर्थङ्करैः प्रोक्ताः यदुक्तं प्रवचनसारोद्धारे षड्विंशत्युत्तरशततमद्वारे तत्पाठो यथा-गाथा । आगम १ सुय २ आणा ३ धारणा य ४ जीए ५ एय पंचववहारा केवल १ मणो २ हि ३ चउदस ४ दस ५ नवपुवाइ ६ पढमोत्थ ? । तद्वृत्तिर्यथा-व्यवह्रियन्ते जीवादयोऽनेनेति व्यवहारः, अथवा व्यवहरणं व्यवहारो, मुमुक्षुप्रवृत्तिनिवृत्तिरूपः, तत्कारणत्वाज्ज्ञानविशेषा अपि व्यवहारः स पञ्चप्रकारः, तद्यथा आगम्यन्ते परिच्छिद्यन्ते पदार्था अनेनेति आगमः १, श्रवणं श्रूयत इति वा श्रुतं २, आज्ञायते आदिश्यत इत्याज्ञा ३, धारणं धारणा ४ जीतं ५, तत्र प्रथम आगमव्यवहारः षड्विधः, केते इत्याह-केवलज्ञानमणोहित्ति पदैकदेशे पदसमुदायोपचारात्मनःपर्यायज्ञानं अवधिज्ञानं चउदसदसनवपुवा इति, पूर्वशब्दः प्रत्येकमभिसम्बध्यते, चतुर्दशपूर्वाणि दशपूर्वाणि च एषः सर्वोप्यागमव्यवहार उच्यत इति, इह च यदि केवली प्राप्यते तदा तस्यैवालोचनादीयते, तदभावे मनःपर्यायज्ञानिनस्तस्याप्यभावेऽवधिज्ञानिन इत्यादि यथाक्रमं वाच्यं, तत्र केवल्यादिरागमव्यवहारी स्वयमपि तावत्सर्वं जानात्येव । ततोऽतिचारजातशेषस्य स्वयमपि प्रकटीकृत्य प्रायश्चित्त ददात्यन्यथा चेत्याशङ्क्य प्रासङ्गिकं तदेवाह-"कहे हि सव्वं जो पुच्छोणमाणो वि गूहइ न तस्स देंति परिच्छत्तं च्चित अन्नत्थ सोहय ६२ न संभरइ जो दोस सप्भावनयमायउ पच्चरकी सोहए तेउ माइणोउ न साहए ६३ । कथय सर्वं दोषजातमिति आगमववहारिणा प्रोक्तोऽयं शिष्यो जानानोऽपि स्वदोषान्मायावितया गूहति गोपयति न तस्मै मायाविने प्रायश्चित्त ददति आगमव्यवहारिणः, किन्तु ब्रुवतेऽन्यत्रान्यस्य समीपे गत्वा शोधय

यपि ग्रहाण, यस्तु सज्ञावत एव दोषान् कांश्चिन्न स्मरति न पुनर्मायया पुनरस्य तान् दोषान्मत्यसौ प्रत्यक्षज्ञानी आगमव्यवहारीत्यर्थः सोऽपरिस्म कथयति, मायाविनं न कथयतीति एतदुक्तम्भवति, आगमव्यवहारी यदि केवलज्ञानादि बलेनैवजानाति, यथैष भणितः सन् गुरुमायतास्सम्यक्मतिपत्स्यते, इति तदा स्मारयति यथाऽमुकं त्वया–ऽऽलोचनीयं विस्मृतं, ततस्तदयाऽऽलोचयति, यदि पुनरेवदवगच्छति, यथैष भणितोऽपि सन्मायाविनया न सम्यक्मतिपत्स्यन्ते इति, तदा तममतिपत्स्यमानं नैव स्मारयति निष्फलत्वात्, अमूढलक्षो हि भगवतागमव्यवहारी, अत एव दर्शनसम्यालोचनायां यथाऽऽलोचकः सम्यगावृत्तो ज्ञातस्तस्मै प्रायश्चित्तं प्रयच्छति, अथ न मत्यावृत्तस्ततो न प्रायश्चित्तं प्रयच्छति, अथ न मत्यावृत्तस्ततो न प्रयच्छतीति, न तु चतुर्दशपूर्वधरादेः कथमयस्य ज्ञानित्वं, तस्य श्रुतज्ञानत्वेन परो क्षज्ञानमावितात् उच्यते–चतुर्दशादि पूर्वकम्पि समुत्पन्नस्यापि ज्ञानस्य प्रत्यक्षतुल्यत्वात्तथा हि येन यथा योऽतिचारः कृतस्तथा सर्वमेते जानन्तीति । अथ यदि आगमव्यवहारिण सर्वभावविषयं परिज्ञानं तत कस्मात्तस्य पुरत आलोच्यते, किन्तु तस्य समीपमुपगम्य एतज्व्यमपराधे मे भवन्तो जानन्त्वेतस्य बोधिं प्रयच्छत्वे स्फुटितं आलोचिते बहुगुणं सम्भवेत् सम्यगाराधना भवति । तथा ह्यालोचनाचार्येण स आलोचक मोत्साह्यते, यथा धन्य सर्वं धन्यस्त्वं मागू यदेवं मानवं हितार्थतया स्वरहस्यानि प्रकटयसि महादुष्करमेतत्, एवं स मोत्साहित सत्वर्द्धमानपरिणामः सम्यग् निःशल्यो भूत्वा यथावस्थितमालोचयति, बोधिं सम्यक्मतिपद्यते ततः पर्यन्ते आराधनास्तोककाले नैव मोक्षमयनमिति । अथ श्रुतव्यवहारमाह–"आयारपकप्पाइ सेसं सव्वं सुयं विणिदिट्ठं ॥ २ ॥ आचारकल्पो निशीथस्तदादिक कल्पव्यवहारतया श्रुतत्वाविशेषेऽप्यतीन्द्रियार्थेषु विशिष्टज्ञानं सातिशयत्वात्केवलादिवदागमत्वेनैव व्यपदेश, एते च श्रुतव्यवहारिणः स्फुटतरोपलब्धिनिमित्तं मीन्वारानालोचनाभालोचापयन्ति ते ह्येवं द्वौ वारावालोचितेन सम्यगालोचितमसम्यगिति, ज्ञेयं नावगच्छतीति कथमालोचितमसम्यगिति, ज्ञेयं नावगच्छतीति कथमालोचापयन्तीति चेदुच्यते–प्रथमवेलायां निद्रायमाण इव शृणोति, ततो ब्रूते निद्रा प्रमादं गतवानहमिति न

किमप्यशेषमतो भूयोऽप्यालोचय, द्वितीयवारमालोचिते भणति न सुष्ठु मयाऽधुनावधारितमनुपयोगभावादतः पुनरप्यालोचय, एवं त्रिष्वपि वारेषु यदि सदृशं, तर्हि ज्ञातव्यमेष परिणामतोऽकुटिल, इति एवं च सति तस्यापि प्रत्यय उपजायते यथाहं विसदृशभणनेन मायावी लक्षित इति ततो माया निष्पन्नं प्रायश्चित्तं पूर्वं दातव्यं, तदनन्तरमपराधनिमित्तमिति। अथ आज्ञाव्यवहारमाह—"देसंतरट्ठियाणं गूढपयालोअणा आण ६४"। देशान्तरस्थितयो र्गीतार्थयो र्गूढपदैरालोचना निजातिचारनिवेदनमाज्ञाव्यवहारः एतदुक्तं भवति—यदा द्वावप्याचार्यावासेवितौ तत्रार्थं तयाऽतिगीतार्थौ क्षीणजङ्घाबलौ विहारक्रमानुरोधतो दुरतरदेशान्तरावस्थिता मथाववत एव परस्परस्य समीपे गन्तुमसमर्थभूतां तदान्यतर-प्रायश्चित्ते समापतिते सति तथाविधयोग्यगीतार्थं, शिष्याभावे सति धारणाकुशलमगीतार्थमपि शिष्यं समयभाषाया गूढार्थान्यविचाराऽऽसे-वनपदानि कथयित्वा प्रेषयति, तेन च गत्वा गूढपदेषु कथितेषु स आचार्यो द्रव्यक्षेत्रकालभावसंहननधृतिबलादिकं परिभाव्य स्वयं वा तत्र गमनं करोति शिष्यं वा तथाविधयोग्यं गीतार्थं प्रज्ञाप्य प्रेषयति, तदभावे तस्यैवाप्राथितस्य गूढार्थामतिचारशुद्धिं कथयतीति। अथ धारणा व्यवहारमाह ५ गीयत्थेणं दिन्नं सुद्धिं अववहारिऊण तह चेव दित्तम्मधारणा तह उद्धिय पवधरण रूवा वा ४—६५। इह गीतार्थेन संवि-ग्नेनाचार्येण कस्यापि शिष्यस्यपि शिष्यस्य क्वचिदपराधे द्रव्यक्षेत्रकालभाव पुरुषान् प्रतिसेवनाश्चावलोक्य या शुद्धिः प्रदत्ता, तां शुद्धिं तथैवावधार्य सोऽपि शिष्यो यदा न्यत्रापि तादृश एवापराधे तेष्वेव द्रव्यादिषु तथैव प्रायश्चित्तं ददाति, तदाऽसौ धारणानाम चतुर्थो व्यव-हारः, उद्धृतपगरणरूपाऽवधारणा। इदमुक्तं भवतिः—वैयावृत्त्यकरणादिना कश्चिद्गच्छोपकारी साधुरद्याप्यशेषाच्छन्दश्रुतयोग्यो न भवति, ततस्तस्यानुग्रहं कृत्वा यदि गुरुभिरुध्धृतान्येव कानिचित् प्रायश्चित्तपदानि कथयति, तदा तस्य तेषां पदानां धारणं धारणाभिधीयत इति। अथ जीतव्यवहारमाहः—" दव्वाइ विंति ऊणं, संसयणाईण दाणिमा सज्जु, पायच्छित्तं जीयं, रूढवाजं जहिं गच्छो " ॥ ६६ ॥ येष्वपरा-धेषु पूर्वमहर्षयो बहुना तपः प्रकारेण शुद्धिं कृतवन्तस्तेष्वपराधेषु साम्प्रत द्रव्यक्षेत्रकालभावान् विचिन्त्य संहनन धृति बलादीनां च हानि-

मासाय समुचितेन केनचित्पः प्रकारेण या गीतार्थाः शुद्धिं निर्दिशन्ति तत्समयपरिभाषया जीतमुच्यते, अथवा यत्नाचरितं यस्याचार्यस्य गच्छेस्वभावातिरिक्तं कारणतः प्रवर्तितमस्येन बहुभिरनुवर्तितं तदप्युक्तं जीतमुच्यते। तदेवमेतेषां पञ्चानां व्यवहाराणामन्यतरेणापि व्यवहारेण शुद्ध एव प्रायश्चित्त प्रदाने गीतार्थोऽनुस्थपिनिक्षिपते, तत्रागीतार्थो नैकादिदोष सम्भवादुक्तं च—"अगीत नविपाणइ, सोहिं चरणस्स देइ ऊण हि यंतो। तप्पाणं आलोयगं, च पाडेइ संसारे इति १२६॥" इति प्रवचनसारोद्धारवृत्तौ। अतः परं व्यवहार पञ्चकविशेषार्थिभिः श्रीजीतकल्पसूत्रविशेषोऽवलोक्या। इति व्यवहारपञ्चकस्वरूपमवगम्य नवमासपर्यायोऽपि मन्यर्षिः एकादशाङ्गधर कथं जातः? इति शङ्का न कार्या, तस्यागमव्यवहारित्वात्, आगमव्यवहारिणस्तु शेषव्यवहारतो बलवन्त इति। अतः कारणात् शुद्धसाधुभिरपि योगोद्वहनं विधायैव सूत्रं पठनीयं न त्वन्यथेति। अथ साधूनामपि योगादितपोऽनुष्ठान परिसमाप्तावनस्यं नन्यादिर्महोत्सव कर्तव्य एवः न च किमिदं निर्ग्रन्थानामुत्सव करणमित्यादि शङ्का कार्या, जिनशासनोद्भावकत्वात् सुसिद्धान्तोक्तत्वाच्च। यदुक्तं व्यवहारभाष्यवृत्तौ प्रथमोद्देशके तथाहि-तद्युक्तः प्रतिमा प्रतिपत्तिविधिरिदानीं समाप्तिविधिमाह "तीरिय उज्झामणवो य दरिसणं साहु सन्निमप्पाहे दंडिय भोइय असतीसावग संघो य सक्कारे॥" तीरितायां समाप्तायां प्रतिमायामुद्भावनत्वेन श्रमन्त्युद् प्रयाभिक्षाचरास्तेषां नियोगो व्यापारो यत्र स च पूर्वमेकनियोगोग्रामस्तत्र दर्शनमात्मप्रकटनं करोति, ततः साधुसंघं संज्ञिनं सम्यग्दृष्टिं श्रावकं वा अप्पाहेत्ति संदिशति, ततो दंडस्य राज्ञा निवेदनं स सत्कारं करोति, तदभावे भोजिकस्तस्याप्यभावे श्रावक गणस्तस्याप्यभावे सङ्घसाधुसाध्वीवर्गं, इयमत्र भावना-प्रतिमायां समाप्तायां यस्मिन्ग्रामे प्रत्यासन्ने बहवो भिक्षाचराः साधवश्च समागच्छन्ति, तत्रागत्यात्मान दर्शयति, दर्शयन् च साधुश्रावकं पश्यति तस्य संदेशयति कथयति, यथा समापिता मया प्रतिमा, ततोऽहमागत इति, तत्राचार्या राज्ञो निवेदयन्ति, यथा अमुको महातपस्वीसमाप्तवान् कर्मा संयतस्तदतिमहतासत्कारेण गच्छे प्रवेशनीय इति, ततः स राजा तस्य सत्कारं कारयितव्यस्तदभावेऽपिच्छस्य ग्रामस्य नगरस्य वा नायकस्तदभावे समृद्धश्रावकस्तदभावे साधुसाध्वीवर्गमप्रतिकसाधो

यथाशक्तिसत्कारं करोति, सत्कारो नाम तस्योपरि चन्द्रोदयधारणं नान्दी तूर्यास्फालनं सुगन्धवासक्षेपणमित्यादि एवं रूपेण सत्कारेण गच्छेप्रवेशयेत्, सत्कारप्रवेशनायामिमे गुणाः—" उज्झावणा पवयणे सद्धा जणणं तहेव बहुमाणो। ओहावणा कुतित्थे जीअं तह तित्थवुड्ढीय॥ प्रवेशस कारेण प्रवचने प्रवचनस्योद्भाजनं प्राबल्येन प्रकाशनं भवति, तथाऽन्येषां बहूनां साधूनां श्रद्धा जननं यथा वयमप्येवं कुर्मो, येन महती शासनस्य प्रभावना भवति, तथा श्रावकश्राविकाणां अन्येषां च बहुमानमुपजायते शासनस्योपरि, यथा अहो ! महाप्रतापिपारमेश्वर शासनं, यत्रेदृशा महातपस्विन इति, तथा कुतीर्थी, जातावेकवचनं, कुतीर्थानामपभ्राजना हीलना, तत्रेदृशां महासत्वानां तपस्विनामभावात्, तथा जीतमेतत् कल्प एष यथा समाप्तप्रतिमानुष्ठानः सत्करणीय इति, तथा तीर्थवृद्धिश्च, संसाराद्विरज्यते विरक्ताश्च परित्यक्तसङ्गाः प्रव्रज्यां प्रति पद्यन्ते, ततो भवति तीर्थप्रवृद्धिरिति। इति श्रीव्यवहारभाष्यवृत्तौ प्रथमोद्देशके। अत्रागमकलाकलापकलनाऽकुशलः कुमपाकमती शङ्कां कुर्वन्नाहः—नन्वत्र साधूनां योगादितपोऽनुष्ठानसमाप्तावश्यं नन्द्यादिर्महोत्सवः कर्त्तव्य इत्यत्र नन्द्यादिमहोत्सवः इति कस्तात्पर्यार्थः इति चेदुच्यतेऽत्रोत्तरं यदा साधूनां योगादितपोऽनुष्ठानक्रिया समाप्तिर्भवति तदा गुरुभिस्तत्पदधारकैः साधुभि र्वा योगकर्त्तृणामनगाराणां नन्दिक्रियापुरःसरंगणिपदपण्डितपदादिपदं दातव्यं, तदनुक्रमस्त्वयं प्रथममावश्यकदशवैकालिकोत्तराध्ययनाचाराङ्गसूत्रमहानिशीथोपाङ्गसूत्र-कृताङ्गस्थानाङ्गसमवायाङ्गादिसूत्राणां योगोद्वहनं साधूनां गुरुभिः कारयितव्यं, तदनन्तरं भगवतीसूत्रस्य योगः कारयितव्यः, तद्योगस्य पाश्चात्यभागे योगकर्त्तुः साधोर्गणिपदं गुरुभिर्दातव्यं, यदि शिष्यः पण्डितपदयोग्यो भवेत्, तदा गणिपदं दत्वा तत्कालं पण्डितपदमपि देयं, परं गणिपदमदत्वैव पण्डितपदं न देयं, तस्य गणिपदं विनाऽभावित्वादिति, पण्डितपदस्यापरपर्यायो पन्यासपदमिति। नन्वत्र कीदृशः शिष्यः पण्डितपदयोग्य इति चेदुच्यते—श्रीहीरविजयसूरिभिः कीदृशस्य साधोः पण्डितपदं देयमिति विषयकः पट्टोलिखितस्तद्यथा—" संवत् १६४७ वर्षे मार्गशीर्षे सिते ११ दिने स्तम्भतीर्थे श्रीहीरविजयसूरिभिर्विबुधपदयोग्यताविषयकः पट्टः प्रादुष्क्रियते ॥ १ ॥ हैमन्याकरणपाद

१६०८ वर्षे कस्मिन् वासरे तपसो माघमासस्य माघस्तपा इति हैम्यां सिताया उज्वलायाः पञ्चम्या दिने संवत् १६०८ वर्षे पण्डित हीरहर्षगणेर्वाचकपदस्थापना इति तद्वृत्तौ " तत्समये राजविमलजिद्धर्मसागरपण्डितावपि वाचकेश्वरौ विजयदानसूरिः कृतवान् । तथा तत्रैव षष्ठसर्गे पुनः प्रोक्तं काव्यं " गगनात्मरसेन्दु हायने विशदे पौषजपञ्चमीदिनें धृतशीतरुचीरुचिच्छलोज्वलवस्त्रे किमुतत्पदोत्सवे १०८ व्रतिवारिधिनेमिवासवः स्वपदे स्थापितवान् स वाचकम् , इव पञ्चमकं गणाधिपं मृगराजध्वजतीर्थनायकः १०९ युग्मम् , तद्वृत्तिदेशो यथा संवत् १६१० वर्षे पौषमासे शुक्लपञ्चमीवासरे श्रीहीरहर्षवाचकस्य सूरिपदस्थापना इति " । तथा स्वोपज्ञपट्टावली वृत्तावपि यदुक्तं श्रीधर्मसागरोपाध्यायैस्तत्पाठो यथा—" अडवण्णेत्ति श्रीविजयदानसूरिपट्टेऽष्टपञ्चाशत्तमाः श्रीहीरविजयसूरयः किं विशिष्टाः सम्प्रति तपागच्छे आदित्य सदृशास्तदुद्योतकत्वात् तेषां विक्रमतः त्र्यशीत्यधिकपञ्चदशशत वर्षे १५८३ मार्गशीर्ष शुक्लनवमी दिने प्रल्हादनपुर वास्तव्य ऊकेशज्ञातीय सा० कुराभार्यानाथी गृहे जन्म, षण्णवत्यधिके १५९६ कार्तिक बहुल द्वितीयायां पत्तननगरे दीक्षा, सप्ताधिके षोडशशतवर्षे १६०७ नारदपुर्यां श्रीऋषभदेवप्रासादे पण्डितपद, अष्टाधिके १६०८ माघशुक्लपञ्चमी ५ दिने नारदपुर्यां श्रीवरकाणकपार्श्वनाथसनाथे श्रीनेमिनाथप्रासादे वाचकपदं, दशाधिके १६१० शीरोहीनगरे सूरिपदमिति पट्टावलीवृत्तौ । तथैव श्रीरत्नशेखरसूरिभिरपि क्रमेणैव गणिपदादिपदानि ग्रहीतानि । तथा तत्पट्टधरलक्ष्मीसागरसूरिभिरपि यदुक्तं पट्टावलीवृत्तौ तद्यथा बावण्णोत्ति श्रीमुनिसुन्दरपट्टे द्विपञ्चाशत्तमः ५२ श्रीरत्नशेखरसूरिस्तस्य विक्रमात् सप्तपञ्चाशदधिके च चतुर्दशशत १४५७ वर्षे क्वचिच्च द्विपञ्चाशदधिके १४५२ जन्म, त्रिषष्ठ्यधिके १४६३ व्रतं, त्र्यशीत्यधिके १४८३ पण्डितपदं, त्रिनवत्यधिके १४९३ वाचकपदं, द्व्युत्तरे पञ्चदशशत १५०२ वर्षे सूरिपदं, सप्तदशाधिके १५१७ पोषवदिषष्ठी ६ दिने स्वर्गः स्तम्भतीर्थे बाम्बीनाम्ना भट्टेन बालसरस्वतीति नामदत्तं, तत्कृता ग्रन्थाः श्राद्धप्रतिक्रमणवृत्तिः १, श्राद्धविधि सूत्रवृत्तिः २, आचारप्रदीपश्चेति । तदानीं च लुङ्काख्य लेखकाद्विक्रमादष्टाधिकपञ्चदशशत १५०८ वर्षे जिन

महिमोत्थापनपरलुङ्कामतमतचा, तन्मते वेषधरास्तु विक्रमात् त्रयस्त्रिंशदधिक पञ्चदशशत १५३३ वर्षे जाताः, तत्र प्रथमो वेषधारी भ०
भाणाख्योऽभूदिति । वेषधणोत्ति व्याख्या श्रीरत्नशेखर सूरिपट्टे शिष्यत्राशचमः श्रीलक्ष्मीसागरसूरिस्तस्य विक्रमाच्चतुःषष्ठ्यधिके चतुर्द-
शशत १४६४ वर्षे भाद्रपदवदिद्वितीया २ दिने जन्म सप्तत्यधिके दीक्षा, षण्णवत्यधिके पन्यासपदं, एकाधिके पञ्चदशशत १५०१ वर्षे
वाचकपदं, अष्टाधिके १५०८ सूरिपदं, सप्तदशाधिके १५१७ वर्षे गच्छनायकपदं, एकादशाचार्यपदानि दत्तानि इति पट्टावलीवृत्तौ । इ-
त्यादि ग्रन्थानुसारेण पूर्वोक्तेनाऽनुक्रमेणैव पदानि दातव्यानि । तथा गणिपदानन्तरं पन्यासपद देयं तदनन्तरवाचकपदं तदनुआचार्यपद
वाचकपदमन्तरेणाचार्यपदमपि न देयं । यदुक्त विजयप्रशस्तिकाव्ये सप्तमसर्गे संवत् १६२८ वर्षे फाल्गुनशुक्ल सप्तमी दिने सोमवारे विजय
सेन सूरेराचार्यपदं श्रीरविजयसूरिभिर्दत्तमित्यधिकारे तथाच काव्यं अथ जगत्तोषिपयोधि चन्द्रमाः स्थान जयानां जयसिंह पण्डितः ।
श्रीमदुपाध्यायपदे समूर्धिकन्न्यधायिसूरीन्द्र पदे च सूरिभि' ७० एतद्वृत्तिर्यथा अथास्मिन्मुहूर्ते जयसिंह पण्डितः कि० जगत्तोषिपयोधी
विश्वतोषसक्ते चन्द्रमाः पुन' जयानां स्थाने श्रीउपाध्यायपदे न्यधायि पूर्वमिति गम्यम च पुनः तदनुतत्कालमेव तैः सूरिभिः श्रीहीरवि-
जयाचार्यैं सूरीन्द्रपदे न्यधायि स्थापितः किंवत् समूर्धि मतिविम्बमेव कृतमिति भावार्थ । इति काव्यकलापक व्याख्या ७० इति विजय-
प्रशस्ति काव्यवृत्तौ। अत्रापि एकस्मिन्नेव दिवसे वाचकपदमाचार्यपदं च दत्तं पर प्रथममुपाध्यायपदं दत्वा तदनुआचार्यपदं दत्तं तत्कारणा-
दुपाध्यायमन्तरेण नहि देयमाचार्यपदमिति तथैव श्राद्धविधिवृत्तौ पञ्चदश गाथा व्याख्यायामपि यदुक्तं श्रीरत्नशेखर सूरिभिस्तथाच तथा
पदस्थापना गणिवाचनाचार्यवाचकाचार्यादिपदप्रतिष्ठापनं दीक्षितस्वपुत्रादीनामन्येषां वापदार्हाणां शासनोन्नत्यादिनिमित्त मोटोत्सवैर्विधातव्यं,
श्रूयते हि प्रथमार्हत समवसरणे शक्रेण गणधरपदस्थापनाकारणं मन्त्रिवस्तुपालेनाप्येकविंशतिसूरीणां पदस्थापना कारिता, इति श्राद्धविधि-
वृत्तौ। अत्रापि गणिपदादिपदानाधनुक्रमः मोत्सवत्कारणात् शुद्धसाधुभिस्तदनुक्रमेणैव गणिपदादिपदानि ग्राह्याणि तस्मात्तो भोगडनीयस्त-

त्क्रमोल्लङ्घने महादोषश्चाचार्यक्रमभङ्गापत्तेराचार्यक्रमभङ्गे च जिनाज्ञाभङ्गदोषो लगति आचार्याचरणाया अपि जिनाज्ञासमानत्वात् सिद्धान्तमूलत्वाच्च तथाऽऽधुनिककाले ये निजमात्मानमहंकारतः पण्डितमन्यमानाः केचनसाधवो योगवहन गणिपदादि पदमन्तरेणाऽऽचार्यपदं गृह्णन्ति तेहि मण्डूकप्लुतन्यायं स्वीकुर्वते, यथा मण्डूकः भूमौ विचरन् मध्यस्थभूमिभागं विमुच्य समुत्प्लुत्य अग्रे पतति, तन्मण्डूकप्लुतन्यायः प्रोच्यते, तद्वद्व्याकरणशास्त्रेऽपि सूत्रक्रमेण पूर्वसूत्रादुत्तरसूत्रे यत्पदमानीयते, तदनुवर्त्तनं पूर्वोत्तरयोः सूत्रयोर्मध्यस्थ सूत्राणि समुल्लङ्घ्य यत्पदमानेतव्यं तत्पदं मण्डूकप्लुतिन्यायेन विज्ञेयं, तद्वद् ये साधवो योगवहन गणिपदादिपदमन्तरेणैवोपाध्यायपदाऽऽचार्यपदादिपदं रभसा मण्डूकवत्समुत्प्लुत्य गृह्णन्ति, तेषां पदान्यपि सज्जनानां हास्यजनकानि ज्ञेयानीति । तथा ये साधवः योगोद्वहनमन्तरेणानुक्रमरहिता गणिपदादिपदानि गृह्णन्ति तदयुक्तं, तेषां पदान्यपि शुद्धसाधूनामप्रमाणभूतानि ज्ञेयानि, जिनाज्ञाविराधकत्वादिति । गणिपदादिपदानुक्रमस्तत्क्रमेणैव देयं नान्यथेत्युक्तं । अथ गणिपदादिपदान्यपि योग्यस्य साधोः कीदृशैः साधुभिर्दातव्यानि ? इत्युच्यते आवश्यकदशवैकालिकोत्तराध्ययनादिनन्दि सूत्रानुयोगद्वारसूत्रयोगाः येन साधुना कृता भवेयुस्तेन साधुना चारित्रेच्छालघुदीक्षा दातव्या नत्वन्येन नन्द्यनुयोगद्वारसूत्रमन्तरेण नन्दिक्रिया कारावणेऽनधिकारित्वादिति । तथा बृहद्दीक्षा गणिपदं च योग्यस्य पण्डितपदधारिणा साधुना देयं नत्वन्येन, बृहद्दीक्षा गणिपदसमर्पणे पण्डितपदयुक्तः साधुरेवाधिकारी नत्वन्य इत्यर्थः गणिपदधाररित्वात् । तथा पण्डितपदमपि पण्डितपदधारिणा योग्यस्य देयं नत्वन्येन, तथा वाचकपदाचार्यपददानेऽधिकारी तु आचार्यपदधरः साधुरेव नान्यसाधुरिति, आधुनिककाले आचार्यपदधारकसाधुमन्तरेण दृष्टिरागिणो निजपक्षसाधवः साध्व्यः श्रावकाः, श्राविकाश्चदृष्टिरागतो यस्य कस्यचित्साधोराचार्यपदं समर्पयन्ति तदप्रामाण्यं, तत्पदं शुद्धसाधुभिः सुश्रावकैश्च न प्रमाणं कार्यमिति, नहि वाचकपदमाचार्यपदमाचार्यपदधारिसाधुमन्तरेण कैश्चिदन्यैः कस्यचिद्दातुं शक्यत इति, न सु चतुर्विध सङ्घो यद्याचार्यपदं प्रयच्छति तस्मिन् को दोष ? इति चेदुच्यते—चतुर्विध-

सहस्रभेदेऽपि, आचार्यपदधारि साधुरेव योग्यः, नत्वन्यः इत्यलं विस्तरेण, अतः परं विशेषाधिकारस्तु परम्परायोगविधिसमुत्पन्नेभ्योऽवसेय इति । अथ द्वाभियोगवहनं यद्गुणानं च कर्त्तव्यमित्यर्थे दृष्टान्तानाह—अथ योगवहनगुणाने चाऽऽचाम्लाद्योऽभिग्रहो गोपराध्ययनसूत्रस्य पञ्चमाङ्गसंक्षेपास्याध्ययनाध्येतृमासतुषस्केवली दृष्टान्तस्तथाहि—श्लोकः । योगक्रिया विना साधुः, सूत्रं पठेन्न पाठयेत् । दुष्कर्माणि विलीयन्ते, मन्देषी वरदा सदा ॥ १ ॥ अभार्ये सम्यक्त्वधार्ये, पाटलीपुरे द्वौ बान्धवौ व्यवहारिणावभूतामन्यदा गुरुसमीपे धर्मोपदेशं शुश्रुवतुः यथा । धर्मो महामंगलमङ्गमाभा, धर्मो जनन्युदरस्थिता स्थिताऽपि । धर्मः पिता चिन्तितपूरितार्थो, धर्मः सुहृद्विहितनित्यहर्षः ॥ १ ॥ पत्नी प्रेमवतीसुत सविनयो भ्राता गुणालङ्कृतः, स्निग्धो बन्धुजन सखाऽतिचतुरो नित्यं प्रसन्नः प्रभुः ॥ निर्लोभोऽनुचरः स्वबन्धुनि मायोपयोग्यं धनं, पुण्यानामुदयेन सन्ततमिदं कस्यापि सम्पद्यते ॥१॥ रम्यं रूपं करणपटुताऽऽरोग्यमायुर्विशालं, कान्ता रूपाऽवनितरवत्तः सूनवो भक्तिमन्तः । वसुसम्पद्योवाक्य परिकरतं यशः क्षीरशुभ्रं, सौभाग्यभीतिरिति फलमहो धर्मवृक्षस्य सर्वम् ॥ २ ॥ इत्यादि धर्मदेशनामाकर्ण्य चारित्रमङ्गीचक्रतुः, तयोरेको भ्राता क्षयोपशमभावप्रसूतो भाव, गुरुभिर्योग्यं विज्ञाय सूरिपदे स्थापितः सपञ्चशतीयतिपति सर्वेषां वाचनां ददाति, संशये सति ते साधव पुनः पुनः प्रश्नं कुर्वन्ति, रात्रावपि भणितायकार्थं न लभते, तत ज्ञानावरणीयकर्मोदयात्स चिन्तयति चिन्मां शास्त्रपारगं, यतोऽहं क्षणमपि रतिं न प्राप्नोमि, धन्यो मे भ्राता निश्चिन्तस्तिष्ठति, यतः यदुक्तं केनचित् स्वमित्रं प्रति—"मूर्खत्वं हि सखे ममापि रुचितं यस्मिन् यदष्टौ गुणा, निश्चिन्तो १ बहुभोजनो २ ऽत्रपमना ३ नक्तं दिवाशायकः ४ । कार्याकार्यविचारणान्धबधिरो ५ मानापमाने समः ६, प्रायेणामयवर्जितो ७ दृढवपुः ८ मूर्खः सुखं जीवति ॥ १ ॥ परं नैव चिन्तयति, "नानाशास्त्रसुभाषितामृतरसैः श्रोत्रोत्सवं कुर्वतां, येषां यान्ति दिनानि पण्डितजनव्यायामखिन्नात्मनां । तेषां जन्म च जीवितं च सफलं तैरेव भूर्भूषिता, शेषैः किं पशुवद्विवेकरहितैर्भूभारभूतैर्नरैः ॥ १ ॥ एवं पण्डितगुणान् अचिन्तयन् मूर्खगुणांस्ततोऽपि चिन्तयन् यतोऽहं तेषां मध्ये भवामीति मानसमासे।

अन्यदा मुनयो विहारभूमावाहारग्रहणादिकार्येषु गतास्ततः सूरिश्चिन्तयति, अहो! बहुभिर्दिवसैरद्याऽवकाशो लब्धः, इतो निर्गत्य स्वेप्सितं, साधयामीति विचिन्त्य सूरिर्वसतितो बहिर्गतः, एकाकी नगरान्निर्गच्छन् कौमुदीमहोत्सवे एकं स्तम्भं ददर्श। कथंभूतं? जनैर्गीयमानं, नानाविधभूषणैर्भूषितं, महोत्सवे समाप्ते पुनस्तत्स्तम्भं काकादिभिर्निषेवितं ददर्श, ततः सूरिरचिन्तयत्, असौ स्तम्भो यदा जनैः पूजितः परिवृत्त आसीत् तदात्यत्यन्तशोभाग्रहमासीत्, इदानीं तु कामपि शोभां न लभते नूनं परिच्छदसमन्वितस्यैव शोभां भवेत् नान्यथा, तर्हि धिग्मां परिकरतः जिनधर्मतश्च परिभ्रष्ट स्वैरं विहर्तुमिच्छामीत्यादि विचिन्त्य पुनः स्ववसतौ समागतः स्वमनसैवालोचनां जग्राह, परं दुश्चिन्तितेन ज्ञानावर्णीयकर्मबद्धं तदवस्थितमेव बभूव, पुनः निर्मलं चारित्रं परिपाल्य स्वायुः पर्यन्ते ज्ञानातिचारमनालोच्याऽनशनेन मृत्वा सौधर्मस्वर्गे गतः, ततश्चाभीरसुतो जातः, क्रमाद्यौवने तस्य कन्या परिणायिता क्रमात्तस्याः सुता जाता साऽत्यन्तरूपलावण्या बभूव, अन्यदाऽनेक आभीराः घृतभाजनैः शकटानि भृत्वा विक्रेतुं ग्रामान्तरं प्रतिस्थिरे, तदाऽसौप्याभीरः शकटं भृत्वा स्वपुत्रिकां खेटकत्वेन संस्थाप्य तैः साद्धं चलितः, इतश्चान्ये शाकटिकाः कन्यां वीक्ष्य व्यामोहिताः, व्यग्रमानसा उन्मार्गे शकटानि वाहयामासुः, भग्नानि शकटानि कियन्मात्राणि रूपसक्तानामेतत् यत्परमार्थम्। "रूवेसुजोगिद्धि मुवेइ तिव्वं, अकालिअं पावइ से विणासं। रागाउरे से जह वा पयंगे, आलोअलोले समुवेइ मच्चुं ॥ १ ॥ तदर्थो यथा रूपेषु यः मूर्द्धि उपेति तीव्रं अकालिकं प्राप्नोति सः विनाशम् रागातुरः सः अथवा पतङ्गः आलोकलोलः समुपैति मृत्युमिति गाथार्थः। तत्स्वरूपं दृष्ट्वा तज्जनकः चिन्तयामास धिक् संसारस्वरूपं, जीवा असारे मलमूत्रपुरीषपात्रे स्त्रीशरीरे स्वहितसाधननिरपेक्षाः कामिनो मुह्यन्ति इत्यशुच्यादिभावनयोत्पन्नवैराग्यस्ततः घृतादि विक्रीय निजग्रामे समागत्य स्वां दुहितरमुद्वाह्य, सद्गुरुपादमूले दीक्षामुपाददे। क्रमेणावश्यकादियोगोद्वहनं विधाय, उत्तराध्ययनयोगं वहता तेनाऽध्ययनत्रयं पठितं, पूर्वोपार्जितकर्मोदितत्वेन महता प्रयासेनापि असंखयाध्ययनस्यक्षरमात्रमपि नायाति, ततो गुरुमपृच्छ एतन्नायाति, गुरुणा भणितं हे मुने! लभाऽ-

जीवनोजीवभेदात्त्रयोराशयः समाहृताः त्रिराशिस्तत्प्रयोजनं येषां ते त्रैराशिकाः, राशित्रयाख्यापका इत्यर्थः ६ । तथा स्पृष्टजीवेन कर्म न स्कन्धबन्धवद्बद्धमबद्धं तदेषामस्तीत्यबद्धिकाः, स्पृष्टकर्म विपाकप्ररूपका इति हृदयम ७, इति स्थानाङ्गसूत्रवृत्तौ । अथ धर्म उक्तप्ररूपणादिलक्षण श्रुतधर्मस्तत्प्रधानाः प्रणायकत्वेनाचार्या धर्माचार्यास्तन्मतोपदेष्टार इत्यर्थस्तानाह यथोक्तं स्थानाङ्गसूत्रे तत्रैव स्थले तद्यथा—"एएसिणं सत्तण्हं पवयणनिण्हगाणं सत्तधम्मायरिया होत्था, तं जहा—जमाली १ तीसगुत्ते २ आसाढे ३ आसमित्ते ४ गंगे ५ छलुए ६ गोट्ठामाहिले ७ त्यादिना" अमी सप्तनिन्हवाः स्थानाङ्गसूत्रे सूचामात्रेण सूचितास्तद्विस्तारस्तु तद्वृत्तितोऽवसेयः । तथा अन्यत्रापि प्रोक्तं—अथ के ते जमालि प्रभृतय ? इति तद्वक्तव्यता लिख्यते—तद्यथा "बहुरयजमालिपभवा १ जीवपएसाय तीसगुत्ताओ २ अवत्तासाढाओ ३ सामुच्छेआ समित्ताओ ४ ॥ १ ॥ गंगाओ दो किरिआ ५ छलुआ तेरासिआण उपत्ती ६ । थेरायगोट्ठमाहिलपुट्ठमबद्धं परूवंति ७ ॥ २॥ अनयोरर्थः बहुभिः समयैर्वस्तु निष्पद्यते, नत्वेकसमयेनेति मन्वाना बहुरता जमालिप्रभवा जमालेरुत्पन्नाः १, प्रदेशोऽन्त्यप्रदेशः स एव जीवो येषां ते प्रदेशजीवाः, प्राकृतत्वाच्च व्यत्यये जीवप्रदेशास्ते तिष्यगुप्तादुद्भूताः २, अव्यक्ताः संयतादिज्ञाने सन्देहवादिन आषाढाचार्याज्जाताः ३, सामुच्छेदा उत्पादानन्तरमेव वस्तु समुच्छेदवादिनोऽश्वमित्राज्जाताः ४ क्रियाद्वय एकत्र समये क्रियाद्वयानुभववादिनो गङ्गाचार्याज्जाताः ५, त्रैराशिकानां जीवाजीवनोजीवरूपराशित्रयवादिनां छलुअति वैशेषिकाभिमतषट्पदार्थ निरूपकत्वादुलूकगोत्रत्वाच्च षडुलूको रोहगुप्तः तस्मादुत्पत्तिः ६ स्थविराश्च गोष्ठामाहिलाः स्पृष्टं कञ्चुकवत् अबद्धं चासम्बद्धं न तु क्षीरनीरवदन्योन्यानुगतमात्मप्रदेशैः सम कर्मेति प्ररूपयन्ति अनेन च गोष्ठामाहिलादेवाऽबद्धिकानामुत्पत्तिरिति सूचितमिति गाथा द्वयाक्षरार्थः २ भावार्थस्त्वनयोः गाथयोः सम्प्रदायादवसेयो, विशेषाधिकारस्तु श्रीउत्तराध्ययनसूत्रवृत्ति प्रमुखतोऽवसेयः। एते सप्तापि निह्नवाः सूचनमात्रेणोक्ताः तन्मध्ये तृतीयनिह्नवस्तु योगक्रिया वहनानन्तरं मिथ्यात्वोदयेन समुत्पन्नः । इत्थं अनेकस्थानेषु साधूपधानतपो वर्णितं दृश्यते, अहो ! तदपलपनं यः करोति तस्य धाष्टर्यमना-

दिषु सुतरामसौ प्राप्नोति, तथा च यति रूपे प्राणिनि साधुत्वं भवेन्न वेति सन्दिग्धमेव प्रतिमायां तु जिनत्वं नास्ति निश्चयतः, ततः किमिति सा वन्द्या साधुरूपे च किमिति वन्दनप्रतिषेधः ?। तदा स वादी स्माह—असंयत देवाधिष्ठितयतिरूपे वन्द्यमाने तद्गताऽसंयमरूपपापानुमतिः स्यान्नत्वसौ प्रतिमायामिति, अत्रोच्यते यद्येवं तर्हि ननु देवताधिष्ठितप्रतिमायामप्यनुमतिलक्षणो दोषो भवेदेवेति। अथाऽव्यक्तवादी स्माह—नायं प्रतिमायां दोषः, विशुद्धाऽध्यवसायस्य जिनबुद्ध्या नमस्यतः। अथ सिद्धान्तवादी प्राह—यद्येवं ततो यतिबुद्ध्या यतिरूपं विशुद्धस्य नमस्यतः को दोषो, येन भवन्तः परस्परं न वन्दध्वं ? अत्राहाऽव्यक्तवादी—कश्चिद्यद्येवं तर्हि लिङ्गमात्रधारिणं पार्श्वस्थादिकमपि यतिबुद्ध्या विशुद्धस्य नमस्यतो न दोषः। अथ सिद्धान्तवादी प्राह—तदयुक्तं पार्श्वस्थादीनां सम्यग् निर्ग्रन्थरूपस्याभावत्तदभावश्च आहरेण विहारेणेत्यादि निर्ग्रन्थलिङ्गस्यानुपलम्भात्ततः प्रत्यक्षं दोषवतः पार्श्वस्थादीन्वन्दमानस्य सावद्यानुज्ञालक्षणो दोष एव उक्तं च, "जइ वेलं बगलिंगं जाणत्तस्स नमओ हवइ। दोसो निद्धंधसंपिनाऊण वंदमाणे धुवो दोसो ॥ १ ॥" इति अत्र वेलं वगलिङ्गमिति शब्देन भाण्डविदुषकादि गृहीतसाधुवेष इत्यर्थः। अथ प्रतिमामपि न वन्दध्वं यूयं, हन्त यद्येवं शङ्काचारी भवांस्तर्हि मा देवकृता आहारादयो भवेयुरित्याहारोपधिशय्यादयोऽपि न ग्राह्या इति। किञ्चैवमतिशङ्कालुतायां सत्यां समस्तव्यवहारोच्छेदप्रसङ्गः, यतो निश्चयकारिज्ञानं विना को जानाति यदिदं शुद्धमुताशुद्धं, निर्जीवमुतजीवयुक्, इत्यादिकमपि ज्ञानं विना निश्चीयते नहि ?। किमिदं भक्तं कृमयो वा चीवरादौ प्राणित्वं वा सर्पो वेत्यादि सर्वत्र भ्रान्त्यनिवृत्तेः, सर्वमभोग्य प्राप्तं चेति, यथा वा आर्याषाढदेवो यतिरूपधरोऽत्र दृष्टस्तथा कियन्तः सुरा अन्ये भवद्भिः दृष्टपूर्विणो यदेतावतामात्रेणाऽपि सर्वत्राऽप्रत्ययो भवतां सञ्जातो ? नहि कदाचित्कथंचित्कंचिदाश्चर्यकल्पे कस्मिंश्चित्तथाविधे दृष्टे सर्वत्र तथाभावाशङ्का युज्यते, तस्माद्व्यवहारनयमाश्रित्य युक्तं भवतामन्योन्यवन्दनादिक, यतः छद्मस्थानां हि सर्वाप्रवृत्तिः व्यवहारतः स्यात्, तदुच्छेदे तीर्थस्याऽप्युच्छेदः प्रसज्यते, यदाहुः-"जइ जिणमयं पवज्जह—ता मा ववहार निच्छए मुअह। ववहारनयउच्छेए तित्थोच्छेओ जओ वस्सं

विघ्नश्च माभूच्च विचिन्त्यशिष्यान् । स्वर्गात्समेत्येह विधिं ततान, तेषां स देवः श्रुतभक्तियुक्तः ॥ १ ॥ इति योगवहनस्थिरीकरणे श्रीआ-पादाचा॰शिष्योदाहरणं सम्पूर्णम् ॥ इति साधुयोगवहनविषये ज्ञातद्वयमन्येऽपि दृष्टान्ताः स्वयमेव विद्वद्भिर्विज्ञेया, एवं विभाव्य भव्यभिक्षुभि-र्योगवहनपुरस्सरमेव सूत्रादिकं भणनीयं, नत्वन्यथेति बहुषु जैनसिद्धान्तेषु जिनैरुक्तं, तत्कारणात् जिनाज्ञा परिपालकाः साधवस्तु योगवह-नपुरस्सरमेव सूत्राणि पठन्ति, नत्वन्यथे त । इत्यादि जैनसिद्धान्तेषु बहुस्थानेषु साधुभिरपि योगवहनपुरस्सरं सूत्रसमूहं पठनीयमित्युक्तं, तर्हि श्रावकाणां तु का कथा ? ततस्तीर्थङ्कराज्ञा परिपालकाः श्रावकास्तु जैनागमं नहि पठन्ति वाचयन्ति च जैनागमेषु श्रावकाणामागम-वाचन निषिद्धत्वादिति विशेषार्थः ॥

इति श्रीमत्पन्यासदयाविमलजित्सुशिष्यपन्यासश्रीसौभाग्यविमलजिद्विनेय पन्यासमुक्तिविमलेन विरचितायां स्वोपज्ञागमवाचन-मीमांसावृत्तौ श्रीसप्तदशकाव्यार्थः ॥ १७ ॥

ये योगोद्वहनं विधाय मुनयः सूत्रं पठन्त्युत्तमं,  
श्राद्धा ये विहिताग्रयोगयतिनां शीलादिशुद्धात्मनाम् ।  
वक्त्राच्चैव सुसार्ववाक्य कलितं शृण्वन्ति सूत्रं वरं,  
ते गच्छन्ति समेऽपि मुक्तिविमलद्रङ्गं गृहं श्रेयसाम् ॥ १८ ॥

अथाष्टदशकाव्याख्यामाह । अत्र काव्ये ये मुनयः योगोद्वहनं कृत्वा सूत्रं पठन्ति तथा शीलादिशुद्धात्मनां साधूनां मुखतः सूत्रं शृण्वन्ति ते मुक्तिपुरीं गच्छन्तीति दर्शयन्नाह ये योगोद्वहनमिति—ये मुनयः ये साधवः योगोद्वहनमिति योगवहनं विधायेति कृत्वा उत्तममिति

व्याख्यान वाचनसमयेऽवश्य मुखे मुखवस्त्रिकाया बन्धनस्योक्तत्वात्, तेषां कुमतिनां वन्दनानमस्कारादिकमपि भविनां भूयसे भवभ्रमणाय भवतीति। अत्र कश्चिदाशङ्कां कुर्वन् प्राह–ननु साधुभिर्मुखे मुखवस्त्रिका बन्धनीया, इति कस्मिन् शास्त्रे प्रोक्तं? मुखवस्त्रं तु लुम्पाकास्तु निरन्तरं मुखवस्त्रिका बद्धामेव रक्षन्ति, तत्कारणात् ते एकान्तवादिनस्तथा तेषां कुलिङ्गत्वमत्र तु तत्कारणे सति वसति प्रमार्जनादौ बन्धनीया, ततो नैकान्तवादः, तथा पंचवस्तु ग्रन्थेऽपि साधूनां मुखवस्त्रिका बन्धनं प्रोक्तं श्रीहरिभद्रसूरिभिस्तथा च तत्पाठः। "चउरंगुलं वहत्थीएयं मुहणं तगस्स उ पमाणं बिंति तोचिय मुहप्पमाणाउ णिपुण्णं ॥८१७॥ सपाइयमपायरेणु पमज्जवसहि पमज्जणट्ठा वयंति मुहपोतीणा समुहं च बंधइ तीए वसहि पमज्जं तो ॥८१८॥" तद्वृत्त्येकदेशे यदुक्तम्, श्रीहरिभद्रसूरिभिस्तत्पाठो यथा "चतुरङ्गुलवितस्तिः एतन्मुखानन्तकस्य तु प्रमाणं द्वितीयोऽपि च आदेशः अत्रैव मुखप्रमाणनिष्पन्नं ॥ ८१७ ॥ एतत्प्रयोजनमाह सम्पातिमरजोरेणुप्रमार्जनार्थं एतन्निमित्तं वदन्ति मुखपोतीं तीर्थङ्करादयः तथा नासां मुखं च बध्नाति तया वसत्यादि प्रमार्जनात् ॥ ८१८ ॥" इति पंचवस्तुके ॥ तथौघनिर्युक्ति सूत्रेऽपि प्रोक्तं तद्यथा। "चउरंगुल विहत्थी एवं मुहणंतगस्स उपमाणं। बीयं मुहप्पमाणं गणणमासमाणेण इक्किकं ॥ १०६३ ॥ संपाइमरयरेणू पमज्जणट्ठा वयति मुहपत्तिं। नासं मुहं च बंधइ तीएवसहिं पमज्जं तो ॥ १०६४ ॥" तद्वृत्तिदेशो, यथा–चत्वार्यङ्गुलानि वितस्तिश्च एतच्चतुरस्रं मुखानन्तप्रमाणं अथ वेदं द्वितीयं प्रमाणं यदुत मुखप्रमाणं कार्यं एतदुक्तं भ० वसति प्रमार्जनादौ व्यस्रां कोणद्वये गृहीत्वा यथा कृकाटिकायां ग्रन्थिं दातुं शक्नोति तथा कार्यं गणना प्रमाणेन तदेकैकमेव मुखानन्तकं भवति ॥ १०६३ ॥ सम्पा० सम्पातिमसत्त्वरक्षणार्थं जल्पद्भिर्मुखे दीयते रजः सचित्तरेणुस्तत्प्रमार्जनार्थं मुखवस्त्रिकां वदन्ति नासिकां मुखं च बध्नाति यया मुखवस्त्रिकया वसति प्रमार्जयन् येन मुखादौ न रजः प्रविशति ॥१०६४॥ तथा प्रवचनसारोद्धारस्यैकषष्टितमद्वारेऽपि प्रोक्तं तद्यथा–गाथा। चउरंगुलं विहत्थी एयं मुहणंतगस्सओमाणं बीओ विय-आएसो मुहप्पमाणेण निप्फन्नं ॥ ५१६ ॥ तद्वृत्तिर्यथा चउ० चत्वारि अङ्गुलानि एका च वितस्तिरेतच्चतुरस्रस्य मुखानन्तकस्य मुखव-

शृणोति गुर्वन्तिके धर्मं पर्युपास्ते साध्वीजनं परिणीता चेयं गृहजामात्रा विमलाभिधानेन वणिक् सूनुना, ततः करोति पित्रवष्टम्भेन विशिष्टं धर्मं पठिता, लक्षमधिकं स्वाध्यायस्य बुध्यते स्वनामवत् कर्मग्रन्थादि प्रकरणानि, प्रतिपन्नानि चानया द्वादशापि श्रावकव्रतानि, पालयति निरतिचाराणि, ततोऽन्यदा आस्थानोपविष्टेन मोहमहाचरटेन चिन्तातुरेण निरीक्षिता दिशः ततो मंत्रिसामन्तादिभिरुक्तं आदिशतदेव ! ततो मोहनृपेणोक्तमस्मत्प्रतिपक्षवर्गेऽतीव निबिडी भूता दृश्यते रोहिणी, तत्किमिदानीं ? ततस्तै र्विहस्योक्तं देवसर्वोऽपि निबिडो याव युष्मान्मानुपमात्रस्यापि गोचरं नावगच्छति, ततो मोहराजेनोक्तं प्रेष्यतां तत्र कोऽपि यस्तां पश्चान्मुखीं निवर्त्तयति, अतो यावदेकमपि निरूपयिष्यति तावत्स्वयमभ्युत्थाय प्रोक्तं विकथया एष तावन्ममैव दीयतामादेशः, पश्यामि तावत्तस्याः प्रमाणमतः संज्ञिना सर्वैरेषा गता च तत्समीपे, स्त्रीपुरुषकथा भक्तकथा राजकथा देशकथा लक्षणैश्चतुर्भिरात्मरूपैः प्रविष्टा च सा परमयोगिनी इव तन्मुखे, ततः पितृगृहे वस्त्राच्छादनादिकं निश्चितमवाप्नोति रोहिणी कर्म च मातृपितृप्रसादेन न कोऽपि कारयति गृहे, ततो देवगृहं गतायां कांचिद्वार्त्ता प्रियां पश्यन्त्युपविशति गत्वा तत्समीपे, ततो देववन्दनां परिहृत्याभिदधाति हले ! मयैतच्छ्रुतं, एतच्चाद्यवृत्तं त्वद्गृहे ? सा प्राह—नैवं केनाप्य सद्वृत्तं कथितं, ततो रोहिणी प्राह—असत्यामहिला ममाप्यपलपसि ? सा प्राह-कथमहमलीकेत्यादि विकत्थयत्यालगतितयासह राटीं कर्त्तुं, ततो विकथा योगिनी समुत्साहिता करोत्यन्यया सहराजकथां निवेद्यगतायां चतस्यां प्रारभतेऽपरया सार्द्धं स्त्रीपुरुपकथां, स्वजनादिभीत्या चोत्थितायामस्यामन्यया सह विदधाति भक्तकथां, यथावसौ च ततः प्रस्तावयतिर्द्धकयाचित् समं देशकथां ततो गृहान्निर्गता प्रहरद्वयेऽपि न निवर्त्तते, एवं च प्रतिदिनं कुर्वाणाम्येरिमन् दिने हस्तौ योजयित्वाकेनाऽपि श्रावकेणोक्तासौ महाभावे क्षणमात्रमेतावद्देवगृहे समागम्यते तदेतावच्छुभ भावैरेकाग्रैरेव नन्तु युज्यते, किमेवं वार्त्ताः कुरुथ यूयं ? ततो रुष्टोत्तरयति बान्धव ! किं कूर्मोऽन्यत्र तावत्कोऽपि कस्यचिन्न मिलति, कस्यापि सत्के कोऽपि न गच्छत्यतः प्रियमेलको ऽत्रैव भवति क्षणमात्रमेकान्तेन सुखं दुःखमात्र किञ्चिदुच्यते, इति नाऽसमाधानं विधेयमिति साध्वीनां चोपाश्रये स्वाध्यायं परिहृत्याऽ-

परापरभाविकाभिः सह प्रारभते तथैव विकथा प्रबन्धं, गृह्णाति साधुसाध्वी श्राविकादि दोषानऽनवरत ततो यदि साध्वी चिश्चिच्छिक्षयति, महाभागे! यदितं सर्वमपि परिगलितुं धर्म, किमतेनैहिकामुष्मिकापायकारणेन केवलकर्मबन्धहेतुना विकथा परपरिवादानर्थदण्डेन सर्वसम्प-धिनिमित्त ममृतकल्पं स्वाध्यायमेव विधेहि, ततो मुखमोटक दत्वा प्रतिवदतीच्छाकारेण आर्यिके भवतीनामपि दूरविस्तृतौ विकथा परपरिवादौ परं तावन्तरेमान्यमपि मुखेन बद्धेन तिष्ठतं न कश्चित्पश्यामः, परं तेषां तु वयमपि मुखेनैव कथयामो नवा–न्यैरिव वयं मायां कर्तुं न जानीमो, यास्त्र तु तिष्ठति तास्त्र पितुरपि सत्कं स्फुटमेव वदामो यदि मतिभासते, तर्हि को रूष्यतु कोऽपि तुष्यतु, ततो ज्ञात वमनद्दांनिराकी सदुपदेशाना-मित्युपेक्षिता साध्वीभिरन्यदा च नि द्वहीभूता गुरुसन्निधाने व्याख्यानेऽप्युपविष्टा मस्तेणाच्छादयमस्तु कस्याश्चित्कर्णे स्थित्वा वदति किञ्चि-दन्यतरस्यास्त्वपरं तावद्यावदरम्यमत्तमहिपीवपल्वलमत्र सर्वमपि व्याख्यानं समागतजनमालाव्य करोत्यन्येषामपि श्रुतिभङ्ग ईश्वरदुहिता चेति न कोऽपि किञ्चिज्जल्पति गुर्वादिना तु कदाचित्कपमपि शिक्षिता वदति भगवन्नाहं केनापि सह किञ्चिज्जल्पामि परं यदि पृष्टं केनापि पतिकञ्चिदुत्तरं नदीयते तर्हि स्वल्पेयपिन्मपि मसिद्धिर्लभ्यते, वज्रपातेन यदि कस्याचित्सह किञ्चिज्जल्प्यते इति तता गुरुभिरप्युपेक्षिता, सर्वतो नि द्वहीभूतागमसमधिष्ठिताऽसौ विकथया ततस्तदस्यन्तासक्तो परिगलित सर्वमपि पूर्वाधीतं विस्मृतस्तदर्थं न चिन्तयति प्रवानि नाऽऽलो-चयति तद्विषयान् ममाद्यति देववन्दनायां न मुखपत्त्यऽप्येतन्धं, न रमते चित्तं धर्मकथायां, करोत्यनादरेण किञ्चित्मतिक्रमणादिक, इति मवनमानुकेवलिवपरिमवचनादपि व्याख्यानवाचनादि समये साधूना मुखवस्त्रिकाबन्धनं सम्भाव्यत एव। तथा चैत्यवन्दन बृहद्भाष्येऽपि यदुक्तं गाथा। “ सिंहासणे निसण्णो पायपीढनिउम पायपिठमि। करधरियमोगमुहो जिणनाहो देसणां कुणइ ॥ १ ॥ तेणं चिय सूरिवरा कुर्णति वक्खाणमेम मुहपत्ते। जं ते जिणपडिरूवा धरंती मुहपोत्तीयं नवरं ॥२॥” इति चैत्यवन्दनबृहद्भाष्ये। तथैव लोकप्रकाशग्रन्थे निश्चय-पक्षेऽपि मोक्षमिति। अत्र देशनासमये मुखवस्त्रिकाबन्धनोत्थापक कश्चिदाशङ्को कुरुंमाह–ननु चैत्यवन्दनभाष्ये च लोकप्रकाशे तु तीर्थङ्क-

स्वद्योगमुद्रया सूरिवरैरपि देशना दातव्या नवरमाचार्यैर्मुखे मुखवस्त्रिका धार्या इति प्रोक्तं, परं वन्धनीया इति तु नोक्तं, ततः कथ मुखवस्त्रबन्धनोपदेश ? इति चेदुच्यते अत्रोत्तरं भो लुप्तागमकलाप ! एतदपि तव वचनं कपटिकपटकला विलसित, यतो योगमुद्रया साधवो देशनां ददति तदा मुखवस्त्रिकाबन्धनं युज्यते एव योगमुद्रा लक्षणं चेदं अन्योन्यान्तरिताङ्गुल्योर्द्वयोर्हस्तयोर्दशाङ्गुलयः परस्परमन्तरिताः कृता यत्र तथा कमलकोशाकारवत् संययोजिता यत्र तादृग्मुद्राभ्यां हस्ताभ्यां युक्ता, तथा द्वे कोणोके उदरोपरि संस्थापनीये इति योगमुद्रा। यदुक्तं देववन्दनभाष्ये श्रीमद्देवेन्द्रसूरिभिस्तद्यथा गाथा। अन्नुंण्णंतरिअगुलि कोसागारेहिं दोहिं हत्थेहिं। पिट्टोवरि कुप्परि संठिएहिं तह जोगमुद्दत्ति ॥ १५ ॥ इति तत्रापि सयोजिते हस्तद्वयेऽपि द्वयोरङ्गुष्ठयोर्मध्ये पुस्तक स्थापनीयं तद्वाचयतः साधवो देशनां ददति, यदीदृश्या रीत्या साधवो देशनां ददति, तदा केन हस्तेन मुखवस्त्रिका रक्षणीया? द्वौ हस्तौ तु योगमुद्रां प्राप्तवन्तौ पुस्तकमपि हस्ताङ्गुष्ठयोर्मध्ये स्यात्ततो मुखवस्त्र वन्धनमेवागतमन्यथा तु स्वकीयमुखनिर्गत निष्ठ्यूत पतनात् पुस्तकाशातना भवत्यत एव ज्ञानाशातना भवति, ततो ज्ञानावरणीयं कर्म बध्नाति तत्कारणात् व्याख्यानवाचन समये मुखवस्त्रिकावन्धनमेवोचितमिति। पुन शङ्कां कुर्वन् प्राह—ननु पाठं वाचयित्वा पुस्तकमधो विमुच्य पश्चात्मुखे मुखवस्त्रिकां संरक्ष्य योगमुद्रया व्याख्यानं कथयेत्तस्मिन् को दोष ? इति चेदुच्यते—योगमुद्राभङ्गंविधाय स्वकीयहस्तादधस्तात् पुस्तकमोचनमप्ययुक्तं पुस्तकापमानात्। तथा यदि कदाचित् श्रावकाणां गहन विषयज्ञापन कारणेन साधवो गणधरमुद्रां देशना मध्ये कुर्वन्ति तत्रापि मुखवस्त्रिकाबन्धनमेव युज्यते, गणधरमुद्रा लक्षणं चेदं एकेन हस्तेन पुस्तकं ग्राह्यमेकेन हस्तेन अङ्गुल्यङ्गुष्ठसज्ञया श्रोतॄणामागमगहनविषयज्ञापनं तद्गणधरमुद्रा, अत्रापि मुखवस्त्रिकाबन्धनमेवागतमिति, यदि साधव· सर्वथा पुस्तक विनैव सर्वव्याख्यानं कुर्वन्ति, तेषां तु मुखे मुखवस्त्रिकाबन्धनस्य न प्रयोजनमिति पुस्तक ग्रहणाऽभावात्। नथेदृशः को मूर्खो भवति, यः स्वमतस्थापनरसिकतया ससार समुद्र समुल्लङ्घनायजिनोक्तवचनयानपात्रस्य खण्डन कुर्यात् प्रत्युत जिनोक्तवचनयानपात्रस्य खण्डनं तु

शिष्य श्रीविजयसेनसूरिप्रमुखाचार्याणामप्याज्ञा खण्डनरूपा ऽऽशातनां कुर्वते, विजयसेनसूरिभिः श्रीऋषभदासश्रावकः प्रमाणी कृतो ऽस्त्यत एव तद्वचनं सर्वथा च प्रमाणमेव । तथा संवत् १७६९ वर्षे पौषकृष्णत्रयोदशी दिने मङ्गलवारे, उनावानगरे, श्रीउदयरत्नवाचकैर्भुवनभानु केवलिरासको रचितस्तस्मिन् रासके षट्षष्टितम ढालसत्क दोधकवर्गे रोहिणी भवस्थानकेऽपि प्रोक्तं । तथा च तत्पाठः ॥

॥ ढाल वासठमी ॥ जोसीयडो जाणे जोस विचार—ए देशी ॥

मुह मरडी तव ते कहेरे, साधवीजी सुणो वात । साधुजनें पण सर्वथारे, विकथा न वरजी जात ॥ १ ॥ गुरणीजी मलि मलि म करो भांड ॥ आंकणी ॥ न गमे मुने पाखंड गु० न तजाए अनर्थदंडतो, जीम थाये शत खंड गु० ॥ २ ॥ मुहपतिए मुखबांधीनेरे, तुमे बेसोछो जेम गु० तिम मुखे डुचो देईनेरे, बीजे बेसाए केम गु० ॥ ३ ॥ मुख बांधी मुनिनी परेरे, परदोष न वदे प्राहिं गु० साधु विना संसारमांरे क्यारे को दीए क्यांही गु० ॥ ४ ॥ सरलपणे अमे सहीरे, जेवूं देखुं ज्यांहि गु० परने पण मुख ऊपरेरे, तेहवुं भाखुं त्यांहि गु० ॥ ५ ॥ इति श्रीभुवनभानुकेवलि रासवचनादपि साधूनां मुखवस्त्रिका वन्धनपूर्वकवाचनं सम्भाव्यत एवेति । तथा संवत् १८१० वर्षे महाशुक्लद्वितीया दिने शुक्रवारे वान्यबन्दरनगरे श्रीलब्धिविजयगणिना हरिबलमच्छिरासको रचितस्तस्मिन् रासकेऽपि द्वितीयोल्लासे सप्तमी ढाल सत्कदोधकमध्ये प्रभातसम्बन्धिकर्त्तव्यताऽधिकारे व्याख्यानवाचन समये साधूनां मुखवस्त्रिका वन्धनं स्फुटमेव प्रोक्तं तद्यथादोधकः सुलभबोधिजीवडा, भांडे निजरवटकर्म । साधुजनमुख मुहोपत्ति, बांधि कहे जिनधर्म ॥ १ ॥ इत्यादि ग्रन्थानुसारेण देशनावसरे मुखवस्त्रिकावन्धनमेवोक्तमेतच्छास्त्रपाठानवगणय्य ये कुमतिनो देशनासमये मुखे मुखवस्त्रिकां न बध्नन्ति, तेषां व्याख्यानश्रवणमपि श्रोतृजनकर्णयोस्त्रपुनिक्षेपसदृशं ज्ञेयं, लुम्पाकमति व्याख्यान सदृशत्वादिति । अत्र व्याख्यानावसरे मुखे मुखवस्त्रिका बन्धनोत्थापकः शङ्कां कुर्वन्नाह—ननु एते ग्रन्थास्त्वर्वाचीनाचार्यैर्विहिताः सन्ति, न तु प्राचीनैरिति तत्कारणात् कस्मिंश्चित्सूत्रे मुखवस्त्रिका वन्धनं प्रोक्तं किं वा नेति चेदु-

धापत्तिः, कथमिति चेदुच्यतेपूर्वोक्तसूत्रपाठे तु मुखवस्त्रिकां विना ईर्यापथिकीवन्दनकप्रतिक्रमण जृंम्भणवाचनादिकरणे प्रायश्चित्तमित्युक्तमत्र पाठे तु कर्णस्थितायामेव मुखवस्त्रिकायां यदीर्यापथिकी प्रतिक्रमणे पुरिमार्द्धतपः प्रायश्चित्तमुक्तमिति वचनेन सहैवविरोधापत्तिरिति । पुनरत्रशङ्कां कुर्वन्नाह—ननु अत्रेर्यापथिकीकरणे मुखवस्त्रिकाया अबन्धनं प्रोक्तम्तस्य कोऽभिप्राय ? इति चेदुच्यते वाचनादिस्वाध्यायकरणे मुखवस्त्रिका बन्धनीया, परं यदि प्रमादतः कर्णे स्थितायामेव तस्यामीर्यापथिकीं करोति, तदा तस्य प्रायश्चित्तमिति । तथा व्याख्यानवाचन समये मुखे मुखवस्त्रिका बन्धनीया, ततः व्याख्यानमध्ये पौरुषी पाठनसमये मुखवस्त्रं कर्णतः संनिकास्य पश्चादीर्यापथिकी प्रतिक्रम्येतः यदि व्याख्यानकालेऽपि पौरुषीपाठनसमये कर्णतो मुखवस्त्रमनिष्कास्यैव यदीर्यापथिकीं यः साधुः प्रतिक्राम्यति, तस्य प्रायश्चित्तमित्यभिप्रायो ज्ञेयः वृद्धपुरुषा अप्येवमेव प्रतिपादयन्ति व्याख्याने तु मुखवस्त्रं मुखे बन्धनीयमेव, तथैव परम्परयापि श्रूयते तादृगविशुद्धपरंपराखण्डनेऽपि महादोषः जिनाज्ञया समान त्वादिति । पुनरत्र व्याख्याने मुखवस्त्रिकाबन्धनोत्थानकः शङ्कां कुर्वन् प्राह—ननु अत्र वाचनादिस्वाध्यायकरणे मुखवस्त्रबन्धनं प्रोक्तं, परं व्याख्याने तु बन्धनं नोक्तं, तर्हि देशानायां कथं बन्धनोपदेश ? इति चेदुच्यते—भो ! एतदपि तव वचनमकुशलकलाविलासत्वं सूचयति, यतः ' वाचनादिस्वाध्याय करणे ' इति पाठे व्याख्यान मागतमेव, वाचना आदिर्यस्य स वाचनादिस्तादृक-स्वाध्याय इति तीर्थङ्करैः स्वकीयागमे स्वाध्यायस्य पञ्चभेदाः प्रकीर्त्तितास्तद्यथा वाचना १ प्रच्छना २ परिवर्त्तना ३ अनुप्रेक्षा ४ धर्मकथा च ५ एते स्वाध्यायस्य पंचभेदाः । यदुक्तं पाक्षिकसूत्रवृत्तौ श्रीयशोदेवसूरिभिः " पंचिदियसंवरणं, तहेव पंचविहमेव सज्झायमिति " गाथा व्याख्यायां तत्पाठो यथा—तहेवत्ति तथैव तेनैव प्रकारेण पञ्चविधमेव वाचनाप्रच्छनापरावर्त्तनानुप्रेक्षाधर्मकथाभेदात्पञ्चप्रकारमपि तत्र वक्ति शिष्यस्तं प्रति गुरोः प्रयोजनभावो वाचना पाठन मित्यर्थः, गृहीत वाचनेनापि संशयाद्युत्पत्तौ पुनः प्रष्टव्यमिति, पूर्वाधीतस्य सूत्रादेः शङ्कितादौ प्रश्नः प्रच्छनेति, प्रच्छना विशोधितस्य माभूद्विस्मरणमिति, परिवर्त्तनासूत्रस्य गुणनमित्यर्थः, सूत्रवदर्थेऽपि सम्भवति

उत्सूत्रप्ररूपणां कर्त्तारः अत एव भव्यप्राणिनामात्मनश्च संसारं वृद्धिं नयन्ति, ते संसारे पतन्ति अन्यानपि भव्यप्राणिनः पातयन्ति उत्सूत्रवचनं क्लिष्टकर्मबन्धहेतुत्वात्, यदुक्तमुपदेशमालायां गाथा । उस्सुत्तमायरंतो, बंधइ कम्मं सुचिक्कणं जीवो । संसारं च पवड्ढइ, मायामोसं च कुव्वइ य ॥ २२१ ॥" एतत्पाठवृत्तिर्यथा–उत्सूत्रं सूत्रविरुद्धं आचरन् समाचरन् बध्नाति आत्मप्रदेशैः सहसंक्लिष्टं करोति किं ?, कर्म, ज्ञानावरणादिकीदृशं ? सुचिक्कणं गाढं निकाचितमित्यर्थः, जीवो इति अयं च पुनर्मायामोसं इति माया मृषा मायया युक्तमसत्यभाषणरूपं सप्तदशं पापस्थानक करोति, तत्प्रत्ययमनन्तसंसारवर्द्धनं करोतीति भावः ॥ २२१ ॥ इत्युपदेशमालावृत्तौ ॥ इत्यादि पूर्वोक्तजैनागमानुसारेण व्याख्यानवाचनसमये साधूनां मुखे मुखवस्त्रिकाया बन्धनं प्रोक्तमिति एवं जैनशास्त्रपाठानवगणस्य ये कुमतयो व्याख्यानवाचन समये मुखवस्त्रं न बध्नन्ति, ते सूत्रमुत्थाप्योत्सूत्रभाषिणो ज्ञेयास्तेषां व्याख्यानश्रवणं वन्दना नमस्कारादिकमपि भविनां भूयसे भवभ्रमणाय भवत्यत एव तेषां सङ्गमोऽपि दूरतस्त्याज्यः, इत्यस्माकं हितोपदेशः, इत्यलमतिचर्चया । प्रकृतमुच्यते–ये साधवो व्याख्यानवाचनसमये मुखे मुखवस्त्रं बध्वा व्याख्यानं कुर्वन्ति, तथा जैनसूत्रोत्थानरूपोत्सूत्रप्ररूपणां न विदधति योगोद्वाहं विधाय गुरुसन्निधौ सूत्रपाठं पठन्ति, ते साधवो मोक्षनाम निर्मलनगरं प्रतिगच्छन्ति, उत्तरोत्तरकल्याणमालां प्राप्नुवन्ति, तादृशानां मुनीनां मुखतो व्याख्यानश्रवणं श्राद्धानामपि पीयूष गण्डूषसदृशं ज्ञेयमुत्सूत्रप्ररूपणरहितानां जिनाज्ञापरिपालकानां महाव्रतिनां साधूनामनुयायिनः श्रावका अपि हेलया संसारसागरमुल्लङ्घ्य मोक्षनगरं प्रतिव्रजन्ति, अत एवाऽक्षयसौख्यभाजो भवन्ति, इत्यलं विस्तरेण । एवं विधान्य भव्यश्रावकैस्तीर्थङ्कराज्ञा परिपालकैर्जैनागमं नहि वाचनीयं जैनागमेषु श्राद्धानामागमवाचननिषिद्धत्वादितिविशेषार्थः ॥

इतिश्रीमत्पन्न्यासदयाविमलजित्सुशिष्यपन्यासश्रीसौभाग्यविमलजिद्विनेयपन्यासमुक्तिविमलेन विरचितायां स्वोपज्ञागमवाचनमीमांसावृत्तौ श्रीअष्टादशकाव्यार्थः ॥ १८ ॥

मानन्दाद्विमलास्तपागणवरे जाता सुसूरीश्वरा,-
स्तेषां पट्टपरम्परो वयवरे सूर्यास्तमो वारका ।
पन्न्यासा किल सत्ययादिविमलास्तेषां सुशिष्यावराः,
सौभाग्याद्विमला सुभाग्यसहिता जाता सुभद्राश्रया ॥ १९ ॥

अथैकोनविंशति काव्य व्याख्यामाह । अथ काव्ये मूलग्रन्थकारः श्रीआगमशासनमीमांसाकरणमशस्तिमुद्राणमथाह—आनन्दाद्विमला इति तपागणवरे इति तपानामा यो गणेषु गच्छेषु वर श्रेष्ठः स्वामी वा गणधरस्तस्मिन् तपागणवरे, श्रीमत्तपागच्छे इत्यर्थः, आनन्द्विमला इति श्रीआनन्दविमलसूरयः जाताः संजातास्ते कथं भूताः ? सुसूरीश्वरा इति शोभना ये सूरयः आचार्याः पण्डिता अपि तेषामीश्वरा स्वामिनस्तपागच्छाधिपतित्वात्, तेषामानन्दविमलसूरीणां पट्टपरम्परा पाटपरम्परा तत्रैव उदयाचर इति उदयाचलपर्वतस्वरुपोपपन्नात्, पुनः कथं भूता ? तमो यारकाः तमसामज्ञानान्धकाराणां पापानां वा भेत्तारः पुन किं विशिष्टाः ? पन्न्यासा इति पन्न्यासपदधारकाः किलेति निश्चये ईदृशा, के ? इत्याह—सत्ययादि विमला इति सत्यश्या आदिर्यस्य तादृशा विमलाः सत्यादिविमला, पन्न्यासत्यविमलगणिवित्यर्थः, पुनस्तेषां पन्न्याससत्यविमलानां पुनर्वराः श्रेष्ठाः, सुशिष्याः सुविनेया. सौभाग्याद्विमलाः पन्न्यासश्री सौभाग्यविमलगणिनामानो जाता. संजातास्ते कथं भूताः ? सुभाग्यसहिताः स्वकीय शुभभाग्येन सहिता युक्ताः, पुनः सुभद्राश्रया सुभद्र-स्थानाश्रयाः इति काव्यस्यार्थः ॥

विशेषार्थस्त्वयं—तपागच्छाधिपाऽऽचार्यपट्टावल्यां पञ्चपञ्चाशत्तमपट्टधराः, अष्टादशशतसाधुपरिवाराः श्रीहेमविमलसूरयोऽभूवन्, तद्वर्णनं चेदं पट्टावल्यां पण वण्णोत्ति श्रीसुमतिसाधुसूरिपट्टे पञ्चपञ्चाशत्तमः श्रीहेमविमलसूरिः यः क्रियाशिथिलसाधुसमुदाये वर्त्तमानोऽपि साध्वाचारो नातिक्रान्तः यतो ब्रह्मचर्येण निष्परिग्रहतया च सर्वजन विख्यातो महायशस्वी संविग्नसाधु सानिध्यकारी ये दीक्षिता यन्निश्रिताश्च बहव. साधवः क्रियापरायणा आसन्, एतच्चिह्नं च समुदायाऽनुरोधेन क्षमाश्रमणादि विहृतं पक्वान्नादिकं नात्मना भुक्तवान्। ऋषिहाना ऋ० श्रीपति ऋ० गणपति प्रमुखा लुङ्कामतमपास्य तपागच्छाधिराजश्रीहेमविमलसूरिपार्श्वे प्रव्रज्य तन्निश्रया चारित्रभाजो बभूवांसः, सद्गुम्नं कश्चिद्व्रतिनं ज्ञात्वा गणान्निष्कासयामास, न च तेषां क्रियाशिथिलसाधुसमुदायावस्थाने चारित्रं न सम्भवतीति शङ्कनीयं, एवं सत्यपि गणाधिपतेश्चारित्रसम्भवात्, यदागमः—“साले नामं एगे एरडपरिवारेत्ति” तदानीं विक्रमात् द्वाषष्ट्यधिक पञ्चदशशत १५६२ वर्षे सम्प्रति साधवो न दृक्पथमायान्तीत्यादि प्ररूपणापरकडुकनामनो गृहस्थात् त्रिस्तुतिकमतवासितात्कडुकनाम्नोवणिजः कडुकगच्छोत्पत्तिः, तथा विक्रमात् सप्तत्यधिक—पञ्चदशशत १५७० वर्षे लुङ्कामतान्निर्गत्य वींझाख्यवेषधरेण वींजामती नाम्ना मतं प्रवर्त्तितं, तथा च विक्रमात् द्विसप्तत्यधिकपञ्चदशशत १५७२ वर्षे नागपुरीय तपागणान्निर्गत्य उपाध्यायपार्श्वचन्द्रेण स्वनाम्ना मतं प्रादुष्कृतमिति तेषां सुशिष्याःपट्पञ्चाशत्तमपट्टधराः श्रीमत्तपागणगगनाङ्गणदिनमणयः विमलशाखातरुवराः श्रीआनन्दविमलसूरयः संजाताः, परमसंवेगीभूतास्तेषां वर्णनं चेदं, यदुक्तं तपागच्छपट्टावलीवृत्तौ श्रीमहोपाध्यायधर्मसागरगणिभिस्तत्पाठो यथा—सुविहियत्ति० व्याख्या श्रीहेमविमलसूरिपट्टे षट्पञ्चाशत्तम पट्टधरः सुविहितमुनिचूडामणिः, कुमततमो मथनसूर्यसममहिमा श्रीआनन्दविमलसूरिः, तस्य च विक्रमात् सप्तचत्वारिंशदधिके पञ्चदशशत १५४७ वर्षे, फलादुर्गे जन्म, द्विपञ्चाशदधिके १५५२ व्रतं, सप्तत्यधिके १५७० सूरिपदं, तथा यो भगवान् क्रियाशिथिलबहुयतिजनपरिकरितोऽपि संवेगरंगभावितमतिः जिनप्रतिमा प्रतिषेधसाधुजनाभाव प्रमुखोत्सूत्रप्ररूपणप्रबलव्याप्यमानं जननिकरमवलोक्य

कृतायां कल्पलताभिधानायां कल्पसूत्रलघुवृत्तावपि किञ्चिद्विशेषो यथा—तत्पट्टे श्रीहेमविमलसूरि ५५ तत्पट्टे श्रीआणंदविमलसूरि ५६ इत्येतत्पाठव्याख्यायां श्रीहेमविमलसूरीणां श्रीसुमतिसाधुसूरिभिः स्वायुः प्रान्ते सूरिमंत्रदानपूर्वकं पदं दत्तं, ततोऽमासमूरिभ्यां गुरुभ्रातृभ्यां, सहेलादुर्गे विवादे सति दैवात्तत्र चित्रकूटराणकसीरोहीधीशाश्वात्यारोऽपि राजेन्द्राः परिणयोत्सवे मिलितास्तद्विवादभञ्जनायागताः शालायां ततस्तपो द्विष्टमनसो र्द्वाचार्ययोः सदेशाच्छ्रीहेमविमलसूरिभिर्दीयमानायां देशनायां भरतचक्रिदिग्विजये द्वादशवार्षिकेऽभिषेके वर्ण्यमाने सति तैरपि कुंकुमास्पदमानाय्य चतुर्भी राजेन्द्रैः श्रीहेमविमलगुरुभाले तिलकः कृतस्ततः सर्वेऽपि लोकाश्चमत्कारं प्राप्तास्ते गुरवोऽपि महाभाग्या अभूवन्निति, श्रीआणंदविमलसूरीणां इला दुर्गमुख्य शा०मेघाख्यगृहे जन्मनि जाते तद्गृहे पर्यङ्कस्य पुरः शासनदेव्यामुक्ताफलगुहालिकाकृता प्रातः सर्वैः दृष्टा चमत्कारश्चजातः सवत् १५७० वर्षे स्तंभतीर्थे सूरिपदं, सवत १५८२ क्रियोद्धारः, संवत् १५८७ वर्षे येषां श्राद्धेन दोसी कर्मा-ख्येन शत्रुंजयतीर्थोद्धारः कृतः, संवत् १५९६ वर्षे ऽहम्मदावादपार्श्वे निजामपुरे नवोपवासैश्चैत्रसुदिसप्तम्यां स्वर्ग, इति कल्पसूत्रस्य कल्प-लतानाम्न्यां लघुवृत्तौ। तथोपदेशप्रासादग्रन्थेचतुर्विंशतितमस्तंभे चरमभागेऽपि किञ्चिद्विशेषस्तद्यथा। काव्यानि। सौभाग्य भाग्य पूर्णं संवेगतरं गरंगनीरनिधिम्। आनन्दविमलसूरिं स्वपट्टे स्थापयामास ॥ १४ ॥ श्रीविक्रमनृपकालाद्भूजगजशरराशिमितगते वर्षे चक्रुश्चरणोद्धरणं शरणं संवेगवेगवताम् ॥ १५ ॥ निर्ममत्व शरीरेऽपि तपस्तेपे सुदुस्तपम्। तच्छ्रु यतां किञ्चिद्बालो चितं स्वकल्मषम् ॥ १६ ॥ अर्हदादिपदध्यायी विंशतिस्थानकं तपः निर्विकारः प्रकारश्च चतुः शत चतुर्थकैः ॥ १७ ॥ चक्रे पुनस्तपस्तद्वरिग्रपषष्ठैश्चतु.शतप्रमितैः विंशतिषष्ठानि ततो विहरञ्जिनपान् समाश्रित्य ॥ १८ ॥ तीर्थाधिपवीरविभोः षष्ठानि नवे क्षणे क्षामितानि २२९ पाक्षिकमुखेषु पर्वसु षष्ठानि बहुनि चान्यानि ॥ १३० ॥ युग्मं ॥ द्वादशानिप्रभु पञ्चचक्रे प्रथम कर्मणः। तानि पञ्चान्तरायस्य नवैव दशमानीत्यम् ॥ २० ॥ दर्शनावरणस्यापि मोहनीयस्य कर्मणः। अष्टाविंशतिसंख्यानि विशिष्टाष्टमकानि च ॥ २१ ॥ अष्टमदशमान्येवं वेद्ये गोत्रे तथायुषि बहूनि। कृतवान् भगवान्

नाम्ना न च गते कर्मणस्तु तपः ॥ २२ ॥ तत्र निहितानघन श्रीमानानन्दविमलसूरीन्द्रः समस्तापनाकसौख्यं देवसिनिहितैश्चतुःचरणैः ॥ २३ ॥ इत्युपदेशमासावग्रन्थप्रशस्तौ । अथ विजयप्रशस्तिकाव्यवृत्तावपि मोक्तं तथथा—अप्रायश्चन्द्रादालोचना तपो विंशतिस्थानकतपो वीरस्वामिनिर्मितद्विसतैकोन त्रिंशत् पञ्चतपोऽष्टकर्मनाशकतपः प्रमुखवहुतपोग्रह, पतस्ते सप्तानां कर्मणां तपस्तु यथोक्तचतुर्थपष्ठाष्टमादिभि पूर्ण निर्ममे, नाम कर्मणस्तु भक्तविभागुर्यादायुषोऽवसानात्र न समे, इति श्रुतिः, इति विजयप्रशस्तिकाव्यवृत्तौ । अतः परं श्रीआनन्दविमलसूरेः विशेषाधिकारस्तु हीरसौभाग्यकाव्यविजयप्रशस्ति काव्यादितपपट्टावलीप्रमुखग्रन्थादिभ्योऽवसेयः । एवं श्रीमत्तपागच्छाधिपतयः श्रीआनंदविमलसूरयः जैनशासनप्रभावकाः विमलवाला तत्परा अनेकशिष्यपरिवारयुक्ताः जैनशासनस्योद्योतकारकाः संजाता, अत एव तपागच्छ कल्पपादपं दीपितवन्तः, इति तपागणाधिपतिश्रीआनंदविमलसूरि वर्णनं ज्ञेयं, तेषां श्रीआनंदविमलसूरीणां पट्टे सवेगरंगतरंगपरिकलित मतिमानमौलि चूडामणयः पण्डितश्रीऋद्धिविमलगणयस्तेषां शिष्यः पण्डितश्रीकीर्तिविमलगणयः, येषां द्वापञ्चाशद्विनेया अपि पशार्हीं वाचयितारः संजाता स्तेषां पट्टे पण्डितश्रीवीरविमलगणय स्तेषां पट्टे पण्डितश्रीविशुद्धविमलगणयस्तेषां सतीर्थ्याः पण्डितमहोदयविमलगणयः, यद्यपि विशुद्धविमलगणिमहोदयविमलगणयोरेकगुरु शिष्यत्वे तयो गुरुभ्रातृत्वसम्भवस्तथैवाऽभापि गुरुभ्रातृत्वसंभवो ज्ञेयस्तेषां श्रीमहोदयविमल गुरूणां पट्टे पण्डितश्रीमणिविमलगणय स्तेषां पट्टे पन्यासश्रीउद्योतविमलगणयः, ये गृहस्थत्वे मालवदेशनिवासिनः ओसवालवंशोद्भवाः, येषां गृहस्थत्व ओंकारजी इत्यभिधानमासीत्, तेषां पट्टे पन्यास श्रीदानविमलजिद्गणयः, येषामुमियापुरनगरे भुजा इति लोकप्रसिद्धे दसाओसवालज्ञातीयश्रेष्ठिश्रीअमरचन्द्रात्मज मोतीचन्द्रश्रेष्ठिभार्यां कुमांबाकुक्षेर्जन्म, गृहस्थत्वे दीपचन्द्र इति नामाऽऽसीत्, संवत् १८९४ वर्षे जन्म संवत् १९१७ परिव्रज्य, संवत् १९२० वर्षे राजनगरे वैशाख कृष्णपंचमी दिने स्वर्गवासः, श्रीदानविमलगणयः स्वपरशास्त्र प्रवीणवक्तृत्वकलाकलिताः समाजास्तेषां पट्टे आजन्मतोऽपि ब्रह्मचर्यव्रतधारिणः पन्यासदयाविमलजिद्गणयः पण्डितमान्या संजाता, येषां

संवत् १८८६ वर्षे आश्विनशुक्लदशमीदिनेमरुधरदेशस्थपालीनगरसमीपस्थ गोविंदलापुरेविशाप्राग्वाटज्ञातीयमेघजिद्गणिग्भार्या लाधीबाइ गृहे जन्म, गृहस्थत्वे देवजिद्देवाजी इत्यभिधानमासीत्, १९०८ वर्षे वैशाखशुक्लसप्तमीदिने स्वगुरुसमीपे सूरतनगरे व्रत, संवत् १९१६ वर्षे गणिपदं, संवत् १९२३ वर्षे पन्यासपदं, ये पूज्या बहूनां साधूनां गणिपदपन्यासपदादिपद दत्वा बहूपकारं कृत्वा स्वपट्टे स्वशिष्यं संस्थाप्य संवत् १९६२ वर्षे जेष्ठकृष्णपंचमीदिने स्वर्गं विभूषयामासुस्तेषां पट्टे पन्याससौभाग्यविमलगणयः, येषां संवत् १९०९ वर्षे चैत्रकृष्णनवमीदिने श्रीअणहिल्लपुर पत्तनस्थ जव्हेरीवाटकवास्तव्य विशाप्राग्वाटज्ञातीयश्रेष्ठिसांकलचन्द्र भार्या जेठीबाइ गृहे जन्म, गृहस्थत्वे स्वरूपचन्द इति नामाऽऽसीत्, संवत् १९२६ वर्षे वैशाख शुक्लसप्तमीदिने स्वगुरुसमीपे व्रतं, संवत् १९२६ जेष्ठकृष्णदशमीदिने बृहद्दीक्षा, संवत् १९३१ वर्षे पोषकृष्णाष्टमीदिने पादलिप्तपुरे सिद्धाचलतीर्थपादमूले तलहट्टिकायां स्वगुरुतो गणिपदं, संवत् १९४० वर्षे राजनगरे माघशुक्लपंचमी शुक्रवारदिने स्वगुरुतः पन्यासपदं ते गुरवः सम्प्रति विजयन्तेतराम् । एवं श्रीमत्तपागच्छकल्पपादपोद्भव विमलशाखा समुद्भूतसद्गुरुपट्टावलीसारः संज्ञेयः । एवमागमवाचनमीमांसायां प्रशस्ति काव्ये आगमवाचनमीमांसा कर्त्तुः गुरुपट्टावलिप्रोक्ता इति विशेषार्थः ॥

इति श्रीमत्पन्यासदयाविमलजित्सुशिष्यपन्यासश्रीसौभाग्यविमलजिद्विनेयपन्यासमुक्तिविमलेन विरचितायां स्वोपज्ञागमवाचनमीमांसाहर्चौ श्रीएकोनविंशति काव्यार्थः ॥ १९ ॥

तच्छिष्येण सुमुक्तिमुक्तिविमलाख्येनर्षिणा निर्मितो,
ग्रन्थोऽयं गृहिणां जिनोक्तिपठतां शिक्षाप्रदाता मुदा ।

गमवाचने गृहस्थान् समाज्ञापयन्ति, अथवा गृहस्था अपि जैनागमं वाचयन्ति, ते सर्वेऽपि कुमतयस्तीर्थंकराज्ञा विराधका ज्ञेया, इत्यलं विस्तरेण । अत एव तीर्थङ्कराज्ञा परिपालकाः सुश्रावकास्तु जैनागमं नहि वाचयन्ति पठन्ति च सर्वत्र जैनागमेषु हि श्रावकाणां गृहस्थानामागमवाचननिषिद्धत्वादिति भावार्थः ॥

इति श्रीमत्पन्यासदयाविमलजित्सुशिष्यपन्यासश्रीसौभाग्यविमलजिद्विनेयपन्यासमुक्तिविमलेन विरचितायां स्वोपज्ञागमवाचनमीमांसावृत्तौ श्रीविंशतितमकाव्यार्थः ॥ २० ॥

वारे शीतकरे सुराजनगरे सद्देवशा पाटके,
ग्रन्थोऽयं विहितो मया विमलगच्छस्योत्तमोपाश्रये ।
यावच्चन्द्रदिवाकरौ समटतो वृन्दारकाणां सृतौ,
तावद्भूमितले सदा विजयतां ग्रन्थः सतां हर्षदः ॥ २१ ॥

अथैकविंशतितम काव्यव्याख्यामाह । अत्र काव्ये कस्मिन् वारे कस्मिन्नगरे कस्मिन् स्थाने पूर्वोक्त श्रीआगमवाचनमीमांसाग्रन्थः कृतस्तथाऽऽशीर्वादवचनं दर्शयन्नाह-वारे शीतकरे इत्यादि प्रागुक्ते संवत् १९६९ वर्षे श्रावणकृष्णद्वितीयांतिथौ, वारे शीतकरे शीता अनुष्णाकराः किरणा यस्य स शीतकर श्चन्द्रस्तद्वारे सोमवारे इत्यर्थः, कस्मिन्नगरे ? इत्याह-सुराजनगरे इति सुष्ठु श्रीअहम्मदावादपुरे, कस्थाने ? इत्याह-सद्देवशापाटके शोभन देवशापाटके तत्रापि विमलगच्छस्योत्तमोपाश्रये इति तपागच्छकल्पवृक्षोद्भवविमलशाखारूप

गच्छस्य वशमे उपाश्रये, अयमन्थ इति अयं श्रीआगमवाचनमीमांसाग्रन्थः, मयेति मुनिमुक्तिविमलेन विरचित सद्गुरुपुण्यतः कृतः शुभं अथ श्रीमानाशीर्वादवचनमाह—यावच्चन्द्रदिवाकरौ यावत्कालं चन्द्रसूर्यौ वृन्दारकाणां देवानां सतो मार्गे गगनमार्गे इत्यर्थः, समदतः संविचरतः तावदिति तावत्कालं यावत् भूमितले पृथिवीतले ग्रन्थ इति श्रीआगमवाचनमीमांसाग्रन्थः, कीदृशः ? सतां सज्जनपुरुषाणां हर्षदः हर्षमानन्दं ददातीति हर्षदः प्रभूतानन्दः सदानिरन्तरं विजयतां सर्वोत्कृष्टत्वेन प्रवर्ततामित्याशीर्वादः, अत्र ग्रन्थे सर्वाणि काव्यानि शार्दूलविक्रीडितानि सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितमिति लक्षणैर्युतानि, यथा स्थापना SSS || S | S ||| SSS | SS | S एवमनया रीत्या गुरुलघ्वक्षर स्थापनाकृते यद्वृत्तं भवति, तद्वृत्तस्य नाम शार्दूलविक्रीडितवृत्तमिति तथा वृत्तरत्नाकरे केदारभट्टोऽपि सूर्याश्वै मंसजस्तताः स गुरवः शार्दूलविक्रीडितमित्यत्र सूर्याश्वैः, द्वादशभिः सप्तभिर्यतिस्तथा छन्दोमञ्जरी ग्रन्थेऽपि सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितमिति भावः ॥

इति श्रीमत्पन्न्यासदयाविमलजित्सुशिष्यपन्न्यासश्रीसौभाग्यविमलजिद्विनेयपन्न्यासमुक्तिविमलेन विरचितायां स्वोपज्ञागमवाचनमीमांसायां श्रीएकविंशतितमकाव्यार्थः ॥ २१ ॥

॥ इति श्रीआगमवाचनमीमांसामूलग्रन्थः सम्पूर्णः ॥

॥ अथ तद्ग्रन्थस्य स्वोपज्ञवृत्तिकारकप्रशस्ति संवत्सरादिकमाह ॥

॥ शार्दूलविक्रीडितवृत्तम् ॥

आनन्दाद्विमला स्तपागणवरे जाताः सुसूरीश्वरा–स्तच्छिष्याः कृतिनः सुऋद्धिविमला ज्ञानादि रत्नाकराः ।
स्फुर्जत्कीर्त्ति कीर्त्तिविमलास्तेषां विनेयाः पुनः, तेषां धीरसुवीरवीरविमला जाताः सुशीलालया ॥ १ ॥
तेषां शिष्यवरा विशुद्धविमलाः शुद्धाहि तद्भ्रातरः, सत्पूज्याः सुमहोदयादिविमला मोक्षस्य मार्गाध्वगाः ।
तेषां शिष्यधवाः प्रमोदविमलाः सर्वप्रमोदप्रदाः, तेषां सन्मणयो मणीविमलजित्संज्ञाः सुशिष्याधिपाः ॥ २ ॥
उद्योताद्विमलाः प्रखण्डितमला उद्योत दीप्ताः पुन–स्तेषां ज्ञानसुदानिदानविमलाः शिष्या निदानं श्रियाम् ।
पन्यासाः सुदयादयादिविमलास्तेषां विनेया नयाः, सौभाग्याद्विमलाः सुभाग्यभरभृद्देहा मुदामालया ॥ ३ ॥
तच्छिष्येण सुमुक्तिमुक्तिविमला–ख्येनर्षिणा निर्मिता, पन्यासाख्य पदान्वितेन मयका टीकेयमानं ददा ।
स्वोपज्ञागमवाचनस्य रुचिरा मीमांसिकायां मुदा, भव्यानां सुखबोधिनीभविजन स्वान्तां बुजाऽहर्मणि ॥ ४ ॥
सिद्धान्तोदधि मन्थनोत्थविलसत्पीयूष लेशेन स–त्सिद्धान्त प्रविरुद्धमत्र वचनं यत्किञ्चिदुक्तं मया ।
आत्मीय प्रतिभा प्रमाद वशतो मात्सर्यमुत्सार्य वै, तत्सर्वं शुचिचेतसः सहृदयाः संशोधयन्तूचितम् ॥ ५ ॥

॥ यतः दोधकवृत्तम् ॥

अक्षरमात्र पदस्वररेफ व्यञ्जनसन्धिविवर्जितमुक्तम् । साधुरेत्र मम क्षमितव्यं को नवि मुह्यति शास्त्रसमुद्रे ॥ १ ॥

संवद्व्योम ० तुरग ७ नन्द ९ वसुधा १ माने सदे मासके, राकायां शनिवासरे मरचिता टीकेयमाकृतश्रुत् ।
आरम्भो विहितः सुरतनगरे तत्रैव पूर्णीकृता, यावच्चन्द्र दिवाकरौ विजयतां वाचस्सतां सर्वदा ॥ ६ ॥

॥ इति प्रशस्तिकाव्यानि ॥

इति श्रीतपागणगगनांगण समुल्लासनकगगनमणिसकलभट्टारकभट्टारक श्रीमदानन्दविमलसूरीश्वरपट्टपद्मलक्ष्मीललनाललाट-स्वर्णभासनमाधुर्यभिरञ्जित ऋद्धिविमलगणिपट्टपूर्वाचलशैलसूर्यायमान पण्डितकीर्तिविमलगणिपट्टभूषणजगन्मनोहारि निरतिचार पंचा-चारविचारचारु सामाचारीसंचारि पण्डितवीरविमलगणिशिष्यसकलपण्डितमंडलीमौक्तिमौलीयमान परिहतविशुद्धविमलगणिसवीर्यस्वकी-यभूरुधार भवारसम्भारा मिताऽपूर्वमहोदयपण्डित महोदयविमलगणि चरणारविन्दमकरंदेन्दिन्दिर पण्डित प्रमोदविमलगणिपट्ट श्रीप विसर यशामहिमानिस्तारिमर्दरीमणि पण्डित मणिविमलगणिपट्टालङ्कार विषमतरविषयविषधरविपतिरस्कारस्वकीयनिरभिमान ज्ञानध्य-नगर्भित क्रियामार्गमार्गणीयियामबलवलवलिप्तु पण्डितश्रीउद्योतविमलगणिविनेयश्री सिद्धान्तकलाकलापकेसरि किशोरकल्पीबनभूधरकंदर पण्डितदानविमलगणिशिष्यमम्लानस्वनिस्सीमसौम्यतासदनवदन मामागमार पराभूतपीयूषपाद सुविहितसमासांशमौमसमान श्रीमत्पन्यास दयाविमलनिमिमंन सरस्वतीमन्दममणिरत सकलपण्डितसमाजपयोजविकाशनाम्भोजपाणि सभिम मुख्य शिष्य श्रीमत्पन्याससौभाग्यविम लनिरताशरविन्देन्दिन्दिरायमाण विनेय पन्यासमुक्तिविमलेन मरचिता स्वोपज्ञाऽऽगमवाचनमीमांसावृत्तिः सम्पूर्णा ॥

संवत् १९७० वर्षे माघशुक्लपंचमी शनिवारे चास्यावृत्तिरियं प्रथमावृत्तिः ॥ श्रीरस्तु ॥

॥ इति आगमवाचनमीमांसावृत्तिः सम्पूर्णा ॥

इतिश्रीमत्पण्डितमुक्तिविमलगणिकृता

श्रीआगमवाचनमीमांसा

सम्पूर्णा

1627